


# श्रुतिसिद्धान्तसारसंग्रहः ।

अष्टोत्तरशतोपनिषत्सारमुद्धृत्य

मैथिल पं० श्रीबाबूनन्दनशर्मणा सङ्गृहीतः ।



पं० श्रीमत्कुञ्जविहारिशर्मणा संस्कृतः ।





स च

फैजाबादनगरनिवासि-खत्रीवंशावतंससहाइकोटवकालो-

पपद-श्रीयुत बलदेवप्रसाद-वर्म्मणा-

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लैन )

**क्षेमराज-श्रीकृष्णदासश्रेष्ठिनः**

**"श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये**

मुद्रापयित्वा प्रकाशितः ।

संवत् १९७०, शके १८३५.

श्रीः ।

# प्रस्तावना ।



विदितमस्तु सुजनानां यन्मुक्तिकोपनिषदि श्रीरामचन्द्रो नूमन्तम्प्रति " माण्डूक्यमेकमेवाऽलं मुमुक्षूणां विमुक्तये ॥ तथाप्यसिद्धश्चेज्ज्ञानं दशोपनिषदः पठ ॥ १ ॥ ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि ॥ तथापि दृढता नो चेद्विज्ञानस्याऽञ्जनासुत ॥ २ ॥ द्वात्रिंशाख्योपनिषदः समभ्यस्य निवर्त्तय ॥ विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ॥" इत्युपदिश्य यासामष्टोत्तरशतोपनिषदां नामान्यवर्णयत् तासां तुकारामतात्याभिख्येन मोहमय्याम् "तत्त्वविवेचक" मुद्रणयन्त्रालये १८१७ शकाब्दे मुद्रितानां पाठतोऽर्थतश्च श्रवणं मैथिलवंशोद्भवपण्डितबाबूनन्दनशर्मणो विधाय जातश्रद्धाभरो मुमुक्षुजनानामुपकारार्थमेतासामुपनिषदां सारार्थं प्रकरणपूर्वकं भवान्संगृह्णात्वित्युक्तमहाशयमहम्प्रार्थितवान् । अथासौ महात्मा तथेत्यङ्गीकृत्य परिश्रमावचारपूर्वकम् अष्टोत्तरशतोपनिषत्सारभूतमेतं "श्रुतिसिद्धान्तसारसंग्रह" नामानं ग्रन्थं ताभ्यस्संगृहीतवानिति ॥

---

फैजाबादनगरनिवासी हाइकोर्टवकीलेत्युपपदखत्रीवंशोद्भवः

**श्रीबलदेवप्रसाद-वर्मा ।**

# भूमिका।

लोके विदितमस्ति सर्वेषाञ्जीवानां सच्चिदानन्दलक्षणब्रह्मविज्ञानादेव संसारदुःखनिवृत्तिपूर्विका नित्यपरमसुखस्वरूपा कैवल्यमुक्तिर्भवतीति। तद्विज्ञानस्य तु मलविक्षेपाऽऽवरणसञ्ज्ञकानि त्रीणि प्रतिबन्धकानि सन्ति। तान्येव प्रतिबन्धकानि दीर्घकालानुष्ठितनिष्कामसत्कर्मसदुपासनसज्ज्ञानैः क्रमेण विनश्यन्ति। परन्तदनुष्ठानन्तु तेषां सम्यग्ज्ञानेनैव भवति। तत्सम्यग्ज्ञानन्तु सद्गुरूपदिष्टसच्छास्त्रसिद्धान्तवाक्यश्रवणादिभ्यो बहुकालसूक्ष्मबुद्धिसाध्यम्भवति। परञ्चेदानीं स्वल्पायुष्ट्वात्स्वल्पबुद्धित्वाद्विघ्नबाहुल्यात्सद्गुरूणां दुर्लभत्वाच्च सच्छास्त्राणां बहुविस्तरत्वाद्धि तद्बहुकालादिसाध्यं वस्तु कथमल्पकालादिसाध्यम्भवति। अतो बहुजनोपकारार्थं सच्चिदानन्दानन्तलक्षणकरुणार्णवश्रीमत्परमेश्वरानुग्रहेण फैजाबादनगरनिवासिखत्रीवंशोद्भवपरमास्तिकहाईकोर्टवकीलेत्युपपदश्रीयुत- बलदेवप्रसादवर्ममहोदयप्रार्थितेन मया ह्यष्टोत्तरशतोपनिषद्भ्यः सारमुद्धृत्य संगृहीतः।

संग्रहीता-

मैथिल- पण्डित- श्रीबाबूनन्दनशर्मा ॥

# सूचना ।



अत्र येऽङ्काः कठिनशब्दानामुपरिष्टाद्धताः सन्ति तैरेवाङ्कैरुपलक्षितास्टिप्पण्यस्तेषामधः कृताः सन्ति ।

किञ्च येऽङ्काः श्रुत्यादौ कोष्ठान्तरे सन्ति ते यस्या उपनिषदः सा श्रुतिस्तस्याः सूचनाय ।

यावत्कोष्ठान्तर्गतोऽन्योऽङ्को नोपलभ्येत तावत्सा श्रुतिसंहतिस्तस्या एवोपनिषद इत्यपि बोध्यम् ।

अक्षरयोजकशोधकादिदृष्टिदोषाशुद्धिं शुद्धीकृत्य पठेयुः पाठकाः ।



॥ श्रीः ॥

# अथ श्रुतिसिद्धान्तसारसंग्रह-

## विषयानुक्रमणिका ।

**इति श्रुतिसिद्धान्तसारसंग्रहविषयानुक्रमणिका ।**



॥ श्रीः ॥

# अथ श्रुतिसिद्धान्तसारसंग्रहस्य

## वर्णक्रमानुक्रमणिका ।



॥ इति ॥

श्रुतिसिद्धान्तसारसंग्रहस्य वर्णक्रमानुक्रमणिका ।

---

ॐ ब्रह्मणे नमः ।

# अथ शांतिमन्त्राः ॥

(१) ॐ वाङ्मे मनसि प्रतिष्ठिता[1] मनो मे वाचि प्रतिष्ठित[2]मावि[3]रावीर्म एधि वेदस्य[4] म आणीस्थः श्रुतं[5] मे मा प्रहासीरनेनाधीतेनाहोरा[6]त्रान्[7]संदधाम्यृतं[8] वदिष्यामि सत्यं[9] वदिष्यामि तन्[10]मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारम् अवतु वक्तारम् ॥ ॐ शान्तिः[11] शान्तिः शान्तिः ॥

---

१ मनसा यद्यच्छब्दजातं विवक्षितं तदेव वाक् पठत्विति भावः ॥ २ यद्यद् विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यत इति ॥ ३ आविःशब्देन स्वप्रकाशब्रह्मचैतन्यमुच्यते। हे स्वप्रकाश ब्रह्मचैतन्यात्मन् मे मदर्थम् आविरेधि अविद्यावरणापनयनार्थम् प्रकटीभव ॥ ४ हे वाङ्मनसे मे मदर्थम् वेदस्य उक्ततत्त्वविद्याप्रतिपादकग्रन्थस्य आणीस्थः आनयनसमर्थे भवतम् ॥ ५ मे मया श्रुतं गुरुमुखादधीतं ग्रन्थतदर्थजातं च मा प्रहासीः मा परित्यजतु। विस्मृतं मा भूदिति यावत् ॥ ६ अहनि रात्रौ च॥ ७ संयोजयामि आलस्यं परित्यज्य अधीतं ग्रन्थं निरन्तरं पठामीत्यर्थः ॥ ८ परमार्थभूतं वस्तु ॥ ९ व्यावहारिकं यथाभूतमर्थम्॥ १० ब्रह्मतत्त्वम् ॥ ११ शान्तिशब्दस्य त्रिरुक्तिराध्यात्मिकाधिदैविकाधिभौतिकरूपत्रिविधविघ्नप्रशान्त्यर्था ॥

---

(१) ऋग्वेदगतानां वाक्यानां शान्तिः ॥

(१) ॐ पूर्ण[१]मदः[२] पूर्णमिदं[३][४] पूर्णात्[५]पूर्णमु[६]दच्यते[७] ॥ पूर्णस्य[८] पूर्णमादाय[९] पूर्णमेवावशिष्यते[१०] ॥ ॐ शान्तिः ३ ॥

( २ ) ॐ सह[११] नाववतु[१२] सह नौ भुनक्तु[१३] सह वीर्यं[१४] करवावहै[१५] तेजस्विनावधीतमस्तु[१६] मा[१७] विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

---

१ पूर्णं न कुतश्चिद्व्यावृत्तं व्यापीत्येतत् ॥ २ अद इति परोक्षाभिधायि सर्वनाम तत्परम्ब्रह्मेत्यर्थः तत्सम्पूर्णमाकाशवद्व्यापि निरन्तरं निरूपाधिकं च ॥ ३ पूर्णं स्वेन रूपेण परमात्मना व्याप्येन नोपाधिपरिच्छिन्नेन विशेषात्मना ॥ ४ इदं सोपाधिकं नामरूपस्थं व्यवहारापन्नम् ॥ ५ पूर्णात् कारणात्मनः ॥ ६ पूर्णं विशेषापन्नं कार्यात्मकम्ब्रह्म ॥ ७ उद्रच्छति पूर्णात्मस्वभावस्य त्यागायोगात् ॥ ८ पूर्णस्य कार्यात्मनो ब्रह्मणः ॥ ९ पूर्णं पूर्णत्वमेकरसत्वलक्षणम् आदाय गृहीत्वाऽऽत्मस्वरूपैकत्वमापाद्य विद्ययाऽविद्याकृतं भूतमात्रोपाधिसंसर्गजमन्यत्वावभासं तिरस्कृत्य ॥ १० पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्म ॥ ११ परमेश्वरः ॥ १२ शिष्याचार्यौ ॥ १३ विद्याफलम्भोजयतु हृदि धारयतु ॥ १४ विद्याकृतसामर्थ्यम् ॥ १५ निष्पादयावहै ॥ १६ अतिशयेन वीर्यवदस्तु ॥ १७ प्रमादकृतान्यायेनाध्ययनाध्यापनकृतदोषप्रयुक्तम्परस्परं द्वेषम् आवां शिष्याचार्यौ मा करवावहै ॥

---

( १ ) शुक्लयजुर्वेदगतानां वाक्यानां शान्तिः ॥

( २ ) कृष्णयजुर्वेदगतानां वाक्यानां शान्तिः ॥

( १ ) ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणा-
श्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि
सर्वम्ब्रह्मोपनिषदं माऽहम्ब्रह्मनिराकुर्यांम्मा मा
ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणम्मे
अस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः
शान्तिः शान्तिः ॥

---

१ मम सर्वाणीन्द्रियाणि प्राणपञ्चकञ्च ब्रह्मध्यानानुकूल-
तया वृद्धिमाप्नुवन्तु ॥ २ औपनिषदब्रह्मसत्तातिरिक्तसत्ताशून्यं
निखिलमित्यर्थः ॥ ३ अहम्ब्रह्मातिरिक्तंवस्त्वस्तीति वा ब्रह्म
नास्तीति वा ब्रह्म मा निराकुर्याम् मा तिरस्कुर्याम् ॥ ४ परस्परं
मांस्वस्मान्मा वियोजयतु संसारे मा पातयतु ॥ ५ आवयोः
प्रीतिरेवास्तु ॥ ६ ब्रह्मात्मनि निरन्तरं प्रेम कुर्वति मयि ॥
७ ये वेदान्तेषु ॥ ८ शमदमादयः ॥

---

( १ ) सामवेदगतानां वाक्यानां शान्तिः ॥

( १ ) ॐ भद्रं[1] कर्णेभिः[2] शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः[2] ॥ [3]स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः[11]। स्वस्ति नस्तार्क्ष्यो[12] अरिष्टनेमिः[13] स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः ३ ॥

---

१ भजनीयं कल्याणवचनं निर्विशेषब्रह्मप्रतिपादकवेदान्तजातम् ॥ २ ब्रह्मविद्याश्रवणेन आत्मध्यानादिशीला वयम् ॥ ३ तत्तदङ्गाभिमानिन्द्रादिदेवप्रसादेन स्वस्वविषयव्यावृत्तिशून्यैः अङ्गैः करचरणादिभिरवयवैः ॥ ४ ब्रह्मानुसन्धानलक्षणस्तुतिं कुर्वाणा वयम् ॥ ५ सूक्ष्मब्रह्मगोचराभिः श्रुतिभिः ॥ ६ नीरोगत्वादिगुणविशिष्टम् ॥ ७ यच्चिरञ्जीवित्वं तत्प्राप्नुयामेति व्यशेमेत्यस्यार्थः ॥ ८ परिपूर्णब्रह्मानन्दं ददातु ॥ ९ बृहत्कीर्तिः ॥ १० सूर्यः ॥ ११ सर्वज्ञः ॥ १२ गरुडः ॥ १३ ॥ अप्रतिहतगतिः ॥

---

( १ ) अथर्ववेदगतानां वाक्यानां शान्तिः ॥

ॐ ब्रह्मणे नमः ॥

# अथ मङ्गलाचरणम् ॥

नित्यानन्दम्परमसुखदं केवलं ज्ञानमूर्त्तिं
विश्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥
गमागमस्थं गमनादिशून्यं चिद्रूपदीपं
तिमिरान्धकारम् ॥ पश्यामि ते सर्वजनान्तर-
स्थं नमामि हंसं परमात्मरूपम् ॥ २ ॥
चित्सदानन्दरूपाय सर्वधीवृत्तिसाक्षिणे ॥
नमो वेदान्तवेद्याय ब्रह्मणेऽनन्तरूपिणे ॥ ३ ॥
सूदितस्वातिरिक्तारिसूरिनन्दाऽऽत्मभावितम् ॥
सूर्यनारायणाकारं नौमि चित्सूर्यवैभवम् ॥ ४ ॥
यं नत्वा मुनयः सर्वे निर्विघ्नं यान्ति तत्पदम् ॥
गणेशोपनिषद्वेद्यं तद्ब्रह्मात्मपदम्भजे ॥ ५ ॥
श्रीरामसान्निध्यवशाज्जगदानन्दकारिणी ॥
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥६॥
इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम् ॥
तद् ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे ॥७॥

---

( १ ) अज्ञानान्धकारम्प्रति ॥

मन्त्राणां मात्रिका देवी शब्दानां ज्ञानरूपिणी ॥
यस्याःपरतरं नास्ति सैषा दुर्गा प्रकीर्त्तिता॥८॥
तां दुर्गान्दुर्गमान्देवीन्दुराचारविघातिनीम् ॥
नमामि भवभीतोहं संसारार्णवतारिणीम् ॥ ९ ॥
कैवल्यश्रीस्वरूपेण राजमानम्महोऽव्ययम् ॥
प्रतियोगिविनिर्मुक्तं श्रीरामपदमाश्रये ॥ १० ॥
यत्सप्तभूमिका विद्या वेद्यानन्दकलेवरम् ॥
विकलेवरकैवल्यं रामचन्द्रमहम्भजे ॥ ११ ॥
यो रामः कृष्णतामेत्य सार्वात्म्यं प्राप्य लीलया॥
अतोषयद्देवमौनिपटलन्तन्नतोऽस्म्यहम्॥१२॥
निष्कलाय विमोहाय शुद्धायाऽशुद्धवैरिणे ॥
अद्वितीयाय महते श्रीकृष्णाय नमोनमः॥१३॥
कैवल्योपनिषद्वेद्यङ्कैवल्यानन्दतुन्दिलम् ॥
कैवल्यगिरिजारामं स्वमात्रं कलयेऽन्वहम्॥१४॥
यद्ब्रह्मरुद्रहृदयमहाविद्याप्रकाशितम् ॥
तद्ब्रह्ममात्रावस्थानपदवीमधुना भजे ॥ १५ ॥
अध्यारोपमिदं विभाति सकलं ह्यज्ञानतो यस्य वै
यस्य ज्ञानलवेन याति विलयं वै नामरूपात्मकम्।
यो भक्तान्प्रति दर्शयत्यलमजंस्वंस्वप्रकाशन्नमः
तस्मै सच्चिदनन्त्यखण्डवपुषे श्रीदक्षिणामूर्त्तये१६

अद्वयानन्दकूटस्थपूर्णज्योतिस्स्वरूपिणे ॥
अप्रमेयशरीराय दक्षिणामूर्त्तये नमः ॥ १७ ॥
त्रिपरिच्छेदशून्याय निर्गुणाय गुणात्मने ॥
सर्ववेदान्तवेद्याय दक्षिणामूर्त्तये नमः ॥ १८ ॥
तत्त्वमस्यादिवाक्यानाँव्वाच्यलक्ष्यार्थरूपिणे ॥
प्रणवार्थाय गुरवे दक्षिणामूर्त्तये नमः ॥ १९ ॥
स्वेष्टदेवम्प्रणम्यैवं ह्यज्ञानाम्बोधहेतवे ॥
श्रुतिसिद्धान्तसाराणां संग्रहं वै करोम्यहम् ॥ २० ॥
बन्धमोक्षादिकान्यत्र सप्तप्रकरणानि वै ॥
यथामति समालोच्य निबध्यन्ते सताम्मुदे २१
प्रथमम्बन्धमोक्षाख्यं ततः साधनयोगकौ ॥
सृष्टिः स्वरूपोपदेशो संकीर्णं वै क्रमाद्भवेत् २२॥

## अथानुबन्धचतुष्टयम्-

### तत्राधिकारिनिरूपणम् ।

(१) विहितकर्माऽऽचरन्त्साधनचतुष्टयसम्पन्नः १॥

### अथ विषयनिरूपणम् ।

(२) त्वम्पदार्थादौपाधिकात्तत्पदार्थादौपाधिकभेदाद्विलक्षणमाकाशवत्सूक्ष्मं केवलसत्तामात्रस्वभावं परम्ब्रह्म ॥ २ ॥

---

(१) मण्डलब्राह्मणोपनिषद् ब्रा० २। प० ४६। पृ० २। पं० ६॥
(२ ( सर्वसारोपनिषद् पत्र० ३२७। पृ० १ पं० ६ ॥

अथ सम्बन्धनिरूपणम् ।

( १ ) अमितवेदान्तवेद्यं ब्रह्म ॥ ३ ॥

अथ प्रयोजननिरूपणम् ।

( २ ) कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनम् ॥

अथ प्रमाणनिरूपणम् ।

( ३ ) जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतोपनिषदः प्रमाणम् ॥ ५ ॥

---

१ ब्रह्मवेदान्तवाक्ययोर्वेद्यवेदकभावः सम्बन्धः ॥ उपनिषदेव वेदान्तशब्देन प्रतिपाद्यते सर्वत्र ॥ २ षद्लृ-'विशरणगत्यवसादनेषु' इति स्मर्यते । सदेर्धातोरुपनिपूर्वस्य क्विबन्तस्य सहेतुसंसारनिवर्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तलक्षणवती । उपशब्दो हि सामीप्यमाह । तच्चाऽसति संकोचे प्रतीचि पर्यवस्यति । निशब्दश्च निश्चयार्थस्तस्मादैकात्म्यं निश्चितं तद्विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते उक्तं हि अवसादनार्थस्य चावसादादिति ॥

---

( १ ) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० १ । पं० ४०२ । पृ० १। पं० ६ ॥

( २ । ३ ) मुक्तिकोपनिषद् अ० २ । श्रुति७ । ६ । च० ८६० पृ०१ । पं०४।३ ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ श्रुतिसिद्धान्तसारसङ्ग्रहः ।

## बन्धमोक्षप्रकरणम् १.

### अथ बन्धवाक्यानि ।

(१) अनाद्यविद्यावासनया जातोऽहमित्यादिसंकल्पो बन्धः ॥ १ ॥

(२) आत्मेश्वरजीवअनात्मनान्देहादीनामात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः ॥ २ ॥

(३) कुत्सितानन्तजन्माभ्यस्ताऽत्यन्तोत्कृष्टविविधविचित्रानन्तदुष्कर्मवासनाजालविशेषैर्देहात्मविवेको न जायते ॥ तस्मादेव दृढतरदेहात्मभ्रमो भवति ॥ ३ ॥

---

१–परमेश्वरस्यानन्तशक्तिमतो या शक्तिभूता मूलप्रकृतिरस्ति तस्यास्त्वंशभूतत्वादनादिरूपा मलिनसत्त्वप्रधानाऽविद्येत्युच्यते।

२–आत्मा देहो व्यष्टिस्थूलसूक्ष्मकारणशरीरत्रयसमुदायरूपः अस्येश्वरोऽधीश इत्यात्मेश्वरः शरीरत्रयस्वामीत्यर्थः । जीवयति शरीरं स्वचिदाभासप्रकाशेनेति जीवः । आत्मेश्वरश्चासौ जीव आत्मेश्वरजीवः ।

---

(१) निरालम्बोपनिषत् प० ३२९ । पृ० २ । पं० ६ ॥

(२) सर्वसारोपनिषत् प० ३२५ । पृ० २ पं० २ ॥

(३) त्रिपाद्विभूतिमहानारायणोपनिषद् अ०५।प०४८२। पृ०२।पं०१।

अहमज्ञः किञ्चिज्ज्ञोहमहं जीवोऽहमत्यन्तदुः-
खाऽऽकारोहमनादिसंसारीति भ्रमवासनाबला-
त्संसार एव प्रवृत्तिस्तन्निवृत्त्युपायः कदापि न
विद्यते ॥ ४ ॥
मिथ्याभूतान् स्वप्नतुल्यान् विषयभोगाननु-
भूय विविधानसंख्यानतिदुर्लभान्मनोरथान-
नवरतमाशास्यमानोऽतृप्तः सदा परिधावति॥५॥
विविधविचित्रस्थूलसूक्ष्मोत्कृष्टनिकृष्टानन्तदे-
हान्परिगृह्य तत्तद्देहविहितविविधविचित्रानेक-
शुभाशुभप्रारब्धकर्माण्यनुभूय तत्तत्कर्मफल-
वासनाजालवासिताऽन्तःकरणानाम्पुनःपुन-
स्तत्तत्कर्मफलविषयप्रवृत्तिरेव जायते ॥ ६ ॥
संसारनिवृत्तिमार्गप्रवृत्तिः कदापि न जायते ॥
तस्मादनिष्टमेवेष्टमिव भातीष्टमेवानिष्टमिव
भात्यनादिसंसारविपरीतभ्रमात् ॥

१—अत्रार्थे शङ्कराचार्योक्तश्लोकः—आत्माम्बुराशौ निखिलो ऽपि लोको मग्नोपि नाचामति नेक्षते च ॥ अहो विचित्रं मृग-तृष्णिकाभे भवाम्बुराशौ रमते मुधैव ॥

२ अनित्यम्पुत्रकलत्रादिसम्बन्धजन्यं सुखम् ॥ ३ आत्मा-नुभवजन्यमनन्तसुखम् ॥

तस्मात्सर्वेषांजीवानामिष्टविषये बुद्धिः सुखबुद्धिर्दुःखबुद्धिश्च भवति ॥७॥ परमार्थतस्त्वबाधितब्रह्मसुखविषये प्रवृत्तिरेव न जायते ॥

तत्स्वरूपज्ञानाभावात् ॥

तत्किमिति न विद्यते॥ कथम्बन्धःकथम्मोक्ष इति विचाराभावाच्च ॥

तत्कथमिति ॥ अज्ञानप्राबल्यात् ॥

कस्मादज्ञानप्राबल्यमिति ॥ भक्तिज्ञानवैराग्यवासनाऽभावाच्च ॥

तदभावः कथमिति ॥ अत्यन्तान्तःकरणमलिनविशेषात् ॥ ८ ॥

अथ मोक्षवाक्यानि ।

( १ ) नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममताबन्धक्षयो मोक्षः ॥ ९ ॥

---

१–परमसुखावाप्तिः। यतस्त्वेवं ह्यतस्तदनुपदेष्टृगुर्वादिकानां गुर्वादिसञ्ज्ञा न भवन्ति अत्रार्थे श्रीमद्भागवतोक्तश्लोकः– गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात्। दैवन्न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेत मृत्युम् ॥ इति ॥

---

( १ ) निरालम्बोपनिषत् प० ३३० । पृ० १ । पं० ३ ॥

( १ ) यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १० ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्त्योऽमृतो भवत्येतावदनुशासनम् ॥ ११ ॥

अथ बन्धमोक्षवाक्यानि ।

( २ ) चित्ते चलति संसारो निश्चलम्मोक्ष उच्यते ॥ १२ ॥

(३) अशेषेण परित्यागो वासनायां य उत्तमः । मोक्ष इत्युच्यते सद्भिस्स एव विमलक्रमः १३॥

(४) ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते १४

१ विषयसुखेच्छारूपाः२-बुद्धौ स्थिताः॥ ३-पुनःपुनर्मरणरहितः ॥ ४ अस्मिन्नेच्छरीरे ॥ ५-ब्रह्मैव भवति ॥ ६-मूलाज्ञानलक्षणकारणेन सह विनश्यन्ति ॥ ७-८-बुद्धिनिष्ठाः चतुर्विधकार्याविद्यालक्षणाः कामानां हेतुभूता ग्रन्थिवद्दृढबन्धनरूपाः ॥ ९ उपदेशः ॥

( १ ) कठवल्ल्युपनिषत् अ०२ । व०६ । मं०१५।१६। प० १२। पृ० २ । पं०९॥

( २ ) योगशिखोपनिषद् अ०६ । श्लोक० ५८। प० ६३० । पृ० २ । पं० १ ।

( ३ ) महोपनिषत् अ०२ । श्लो०३९। प०५७१। पृ० १ पं०४॥

( ४ ) वाराहोपनिषद् अ०२।श्लो० ।४४।प०८१३। पृ०२।पं० ४॥

(१) भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ॥ १५ ॥

(२) इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ॥ १६ ॥

(३) पदाऽर्थभावनादार्ढ्यं[१] बन्ध इत्यभिधीयते ॥ वासनातानवं[२] ब्रह्मन् मोक्ष इत्यभिधीयते ॥ १७ ॥

(४) मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १८ ॥

---

१ दार्ढ्यमतिशयः ॥ २ क्षीणत्वम् ॥

---

(१) महोपनिषत् अ० ५ । श्लो० ९७ । प० ५९२ । पृ० २ पं० ५ ॥

(२) महोप अ० ४ । श्लो० ११६ । प० ५८५ । पृ० २ । पं० ३ ॥

(३) महोपनिषत् अ० २ । श्लो० ४१ । प० ५७१ । पृ० १ । पं० ॥ ६

(४) ब्रह्मबिन्दूपनिषत् श्लो० २ । प० १८८ । पृ० १ । पं० ५ ॥

( १ ) ग्राह्यग्राहकसम्बन्धे क्षीणे शान्तिरुदेत्यलम्। स्थितिमभ्यागता शान्तिर्मोक्षनामाऽभिधीयते ॥ १९ ॥

( २ ) पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति २०॥ तन्निरोधनं जीवन्मुक्तिः ॥ २१ ॥

अथ जीवन्मुक्तवाक्यानि।

( ३ ) ये शुद्धवासना भूयो न जन्माऽनर्थभागिनः। ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥ २२ ॥

( ४ ) तपःप्रभृतिना यस्मै हेतुनैव विना पुनः ॥ भोगा इह न रोचन्ते स जीवन्मुक्त उच्यते २३॥

---

१-न जन्मजरामरणदुःखादिवेदिनः ॥

---

( १ ) संन्यासोपनि० श्लो० ४२। प०६३८। पृ० २। पं०८॥

( २ ) मुक्तिकोपनिषत् अ० २। श्रु ४ । ५। प० ८६०। पृ० १। पं० १॥

( ३ ) महोपनिषत् अ० २। श्लो० ४०। प० ५७१। पृ० १। पं० ५॥

( ४ ) महोपनि० अ०२। श्लो०४२। ४३ ।४४ । प०५७१। पृ०१। पं०७॥

आपतत्सु यथाकालं सुखदुःखेष्वनारतः । न हृष्यति ग्लायति यस्स जीवन्मुक्त उच्यते २४ हर्षाऽमर्षभयक्रोधकामकार्पण्यदृष्टिभिः । न परामृश्यते योऽन्तस्स जीवन्मुक्त उच्यते २५॥

(१) ईप्सिताऽनीप्सिते न स्तो यस्यान्तर्वर्तिदृष्टिषु । सुषुप्तिवद्यश्चरति स जीवन्मुक्त उच्यते ॥ २६ ॥

(२) यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । यस्समस्सर्वभूतेषु जीवितं तस्य शोभते ॥ २७ ॥ येन सम्यक् परिज्ञाय हेयोपादेयमुज्झता । चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ २८ ॥

(३) न प्रत्यग्ब्रह्मणो भेदं कथाऽपि ब्रह्मसर्गयोः । प्रज्ञाया यो विजानाति स जीवन्मुक्त इष्यते ॥ २९ ॥

---

१–अनासक्तः ॥

२–ग्राह्याग्राह्ये विविच्य त्यजता ॥ ३–प्रतिशरीरमञ्चति गच्छतीति प्रत्यक् जीव इति यावत् ॥

---

( १ ) महोपनि० अ० २ । श्लो० ४६ । प० ५७१ । पृ० २ । पं० ३ ॥

( २ ) सन्न्यासोपनिषद् श्लो० ३९ । ४६ । प० ६३८ । पृ० २ । पं० ५ ॥

( ३ ) अध्यात्मोपनिषद् श्लो० ४६ । ४० । प० ६९० । पृ० २ । पं० २ ॥

साधुभिः पूज्यमानेऽस्मिन्पीडयमानेऽपि दुर्जनैः। समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ३० ॥

(१) सर्वत्र विगतस्नेहो यस्साक्षिवदवस्थितः। निरिच्छो वर्त्तते कार्ये स जीवन्मुक्त उच्यते ३१

(२) कट्वम्ललवणं तिक्तममृष्टं मृष्टमेव च। सममेव च यो भुंक्ते स जीवन्मुक्त उच्यते ३२

(३) जरामरणमापच्च राज्यं दारिद्यमेव च॥ रम्यमित्येव यो भुंक्ते स जीवन्मुक्त उच्यते ३३

(४) शान्तसंसारकलनः कलावानपि निष्कलः। यस्सचित्तोऽपि निश्चित्तस्स जीवन्मुक्त उच्यते ॥ ३४ ॥

यस्समस्ताऽर्थजालेषु व्यवहार्य्यपि निस्पृहः। पराऽर्थेष्विव पूर्णाऽत्मा स जीवन्मुक्त उच्यते ॥ ३५ ॥

---

१ मायाविलासितम् ॥

२ सांसारिकसुखदुःखानुभावनारहितः ॥

---

( १ ) महोपनिषत् अ० २ श्लो० ५१ प० ५७। पृ० २। पं० ९॥
( २ ) महोपनिषद् अ० २। श्लो० ५४। प० ५७२। पृ० १। पं० ३॥
( ३ ) महोप० अ० २। श्लो० ५५। प० ५७२। पृ० १। पं० ५॥
( ४ ) " " ६१। " २। ३॥

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव॥३६॥

(१) उपाधिविनिर्मुक्तघटाकाशवत् प्रारब्ध-क्षयाद्विदेहमुक्तिः ॥ सैव कैवल्यमुक्तिः[1] ॥३७॥

(२) कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी॥

(३) सर्वेषां कैवल्यमुक्तिर्ज्ञानमात्रेणोक्ता ३८

(४) ज्ञानादेव तु कैवल्यम् ॥ ३९ ॥

अथ ससाधनमुक्तिभेदानाह ।

(५) दुराचाररतो[2] वाऽपि मन्नामभजनात्कपे ।
सालोक्यमुक्तिमाप्नोति[3] नतु लोकान्तरादि-कम् ॥ ४० ॥

---

१-केवलस्य अविद्यासम्बन्धरहितस्य सच्चिदानन्दरूपस्य भावः कैवल्यम् । तद्रूपा मुक्तिः कैवल्यमुक्तिः ॥ २-वेदप्रतिषिद्धकर्मानुष्ठानप्रसक्तः ॥ ३-समानलोकनिवासरूपाम् ॥

---

(१। २। ३) मुक्तिकोपनिषत् अ० २। १। प० ८५९। ८५६ पृ० १। २ पं० २। ६। ५॥

(४) चिद्घनानन्दकृतगीताभाष्ये द्रष्टव्यम् ॥

(५) मुक्तिकोपनि०।अ०१। श्लो०१८।२१।प०८५६।पृ०१।पं०५॥

काश्यान्तुब्रह्मनालेऽस्मिन्मृतो मत्तारमाप्नुयात्।
निर्धूता[1]शेषपापौघो मत्सारूप्यंभजत्ययम्॥४१॥
सदा[2]चाररतोभूत्वाद्विजोनित्यमनन्यधीः॥मयि
सर्वात्मके भावो मत्सामीप्यं भजत्ययम्॥४२॥
गुरूपदिष्टमार्गेण ध्यायन् मद्रूपमव्ययम्॥
मत्सायुज्यं द्विजः सम्यक् भजेद् भ्रमर[3]-
कीटवत्॥४३॥
(१) स जीवति मनो यस्य मननेनोपजी-
वति॥जातास्त एव जगति जन्तवस्साधुजी-
विताः॥ ये पुनर्नेह जायन्ते शेषा जर[4]ठग-
र्दभाः॥४४॥

अथाऽविद्वन्निन्दावाक्यानि।

भारोऽविवेकिनश्शास्त्रं भारो ज्ञानं च रागिणः॥
अशान्तस्य मनो भारो भारोऽनात्मविदो
वपुः॥४५॥

---

१ प्रक्षालितसर्वपापसमूहः॥२ शास्त्रविहितस्वधर्मानुष्ठानरतः॥
३ यथा कीटो भ्रमरभयात्तद्भावनया भ्रमरत्वमाप्नोति तथा॥
४ वृद्धगर्दभाः॥

---

(१) महोपनिषत् अ०३ श्लो०१४। प०५७४। पृ०२। पं०२॥

(१) अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः ॥ ब्रह्मतत्त्वन्न जानाति दर्वी पाकरसं यथा ॥ ४६ ॥

(२) अविद्यायामन्तरे वर्तमानाः स्वयं धीराःपण्डितम्मन्यमानाः॥दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥४७

(३) असुर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः ॥ ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ४८ ॥

१ तत्कार्य्यनिरूपितायाम्पुत्रवित्तादिविषयरूपायाम् ॥ २ आत्मानम् ॥ ३ लौकिकप्रज्ञावन्तः ॥ ४ शास्त्रीयप्रज्ञावन्तम् ॥ ५ अत्यन्तकुटिलामनेकरूपां गतिमिच्छन्तः ॥ ६ नानाविधमनर्थम्प्राप्नुवन्ति ॥ ७ सुष्ठु रमन्ते सुरा आत्मारामा विद्वांसस्तेभ्योऽन्येऽसुरास्तेषां योग्याः ॥ ८ कर्मफलभूताश्च शूकरादिदेहविशेषाः ॥ ९ अदर्शनात्मकेन तमसा अज्ञानेन ॥ १० आत्मानमजरामरणलक्षणमप्यज्ञानेन जरामरणादिमन्तमिव मन्यमानाः ॥

(१) मुक्तिकोपनिषत् अ०२। श्लो०६५। प०८६४। पृ०२। पं०३॥
(२) कठवल्ली० अ०१ । व०२ । श्रु०५। प०७ । पृ०१ पं०९ ॥
(३) ईशावास्योपनिषद् मं०३ । प०१ । पृ०१। पं०५ ॥

(१) अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते॥ प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत्४९॥ (२) कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः॥तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥५०॥ ( ३ ) अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ॥ भ्रान्ता एवाखिलास्तेषां क मुक्तिः क इह वा सुखम् ॥५१॥ अज्ञानोपहतो बाल्ये यौवने वनिताहतः ॥ शेषे कलत्रचिन्तार्तः किंकरोति नराधमः ॥ ५२ ॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ॥ धराविवरमग्नानां कीटानां समतां गताः ॥ ५३ ॥

---

१ अनुभूयत आत्माऽस्यामिति-अनुभवज्ञानरूपा ब्रह्मविद्या ताम् ॥ २ तैलधारावदविच्छिन्नब्रह्माकारव्यापाररहिताः ॥ ३ सुखदुःखशीतोष्णादिलक्षणेन ॥

---

( १ ) मैत्रेयोपनिषत् अ० २ ।श्लो० ९२।प० ३०८। पृ० १।पं० २॥

( २ ) तेजोबिन्दूपनिषत् अ० १ । श्लो० ४६ । प० ३४० । पृ० १ । पं० ९ ॥

( ३ ) महावाक्यरत्नावली ॥

अथ स्वविचाराचिकीर्षा।

(१) सत्कर्मपरिपाकात्तु स्वविचारं चिकीर्षति ॥
कोहं कथमयन्दोषस्संसाराख्य उपागतः ६४ ॥
जाग्रत्स्वप्ने व्यवहरन् सुषुप्तौ क्व गतिर्मम ॥
इति चिन्तापरो भूत्वा स्वभासा च विशेषतः ॥ ६५ ॥

इति श्रीमन्मैथिलकुलालंकारबाबूनन्दनशर्मसंगृहीतश्रुतिसिद्धान्तसारसंग्रहे बन्धमोक्षप्रकरणम्प्रथमम् ॥ १ ॥



(१) योगकुण्डल्युपनिषद् अ० ३। श्लो० २८। २९। प०७।५१। पृ० १ पं० ५ ॥

## अथ साधनप्रकरणं द्वितीयम् २.

अथ मनुष्यशरीरस्य श्रेष्ठत्वमाह ।

( १ ) पुरु[1]षो वाव सुकृतम् ॥ १ ॥

अथ नृशरीरे द्विविधं पौरुषं तत्फलञ्चाह ।

( २ ) उच्छास्त्रं[2] शास्त्रितं[3]चेति पौरुषं द्विविधं मतम् ॥ तत्रोच्छास्त्रमनर्थाय[4] परमार्थाय[5] शास्त्रितम् ॥ २ ॥

अथ क्रियोत्पत्तिक्रमस्तत्फलञ्च ।

( ३ ) यत्[6]पुरुषो मनसाऽभिगच्छति तद्वाचा वदति तत्कर्मणा करोति ॥ ३ ॥

---

१ पुरुषशरीर एव पश्वाद्यपेक्षया सर्वपुण्यकर्महेतुत्वाच्छोभनं कृतमिति परमेश्वरम्प्रति इन्द्रियाभिमानिनोऽग्न्यादयोऽब्रुवन् ॥ २ शास्त्रप्रतिषिद्धपापाचरणम् ॥ ३ शास्त्रविहितपुण्यकर्माचरणम् ॥ ४ नरकादिप्राप्तये ॥ ५ मोक्षनिमित्ताय ॥ ६ पूर्वोक्तपुण्यापुण्ययोर्मध्ये यत् यं प्रति ॥

---

( १ ) ऐतरेयोपनिषत् खण्डः २ । प० ३९ । पृ० १ । पं० ७ ॥
( २ ) मुक्तिकोपनिषत् अ० २ । श्लो० १ । प० ८६० पृ० १ । पं० ८ ॥
( ३ ) बृहज्जाबालोपनिषत् अ० १ । ब्रा० १ । श्रु० १ । प० २६५ । पृ० १ । पं० १ ॥

(१) यथाकारी यथाचारी तथा भवति साधु-कारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ॥ ४ ॥

अथान्यसत्कर्मपरिपाकेषु स्वदुष्कर्मप-रिपाकेषु च तापमाह ।

(२) किमहं साधुनाकरवं किमहं पापमकरव-मिति ॥ ५ ॥

अथ सत्कर्मपरिपाके कर्त्तव्यतामाह ।

(३) शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वास-नासरित् । पौरुषेण प्रयत्नेन योजनीया

---

१ यथाकर्त्तुं शीलमस्य सोऽयं यथाकारी करणं नाम नि-यता क्रिया विधिप्रतिषेधशिष्टाचारगम्या ॥ २ यथाचरितुं शी-लमस्य सोऽयं यथाचारी चरणं नामानियतमिति विशेषः ॥ ३ पूर्वपूर्वजन्मकृतपुण्यकर्मसंस्कारेण ॥ ४ पूर्वपूर्वजन्मकृतपा-पकर्मसंस्कारेण ॥ ५ कस्मात् ॥ ६ शोभनं कर्म ॥ ७ न कृत-वानस्मि ॥ ८ प्रतिषिद्धं कर्म ॥

---

(१) बृहदारण्यक अ० ४ । ब्रा० ४ । श्रु० ५ । प० १५४ । पृ० २ । पं० ९ ॥

(२) तैत्तिरीयोपनिषद् वल्ली० २ । अनुवाक ९ । प० ३५ । पृ० १ । पं० २ ॥

(३) मुक्तिकोपनिषद् अ० २ । श्लो० ५ । ६ । प० ८६० । पृ० २ । पं० ४ ॥

शुभे पथि ॥ शुभायां वासनावृद्धौ न दोषाय मरुत्सुत ॥ ६ ॥

(१) यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि ॥ ७ ॥

(२) क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम्॥ ग्राम्यासु जडचेष्टासु सततं विचिकित्सते ॥ पापाद्बिभेति सततं पुण्यकर्माणि सेवते ॥ ८ ॥ स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ॥ देशकालोपपन्नानि वचनान्यभिभाषते ॥ ९ ॥ मनसा कर्मणा वाचा सज्जनानुपसेवते । यतः कुतश्चिदानीय नित्यं शास्त्राण्यवेक्षते ॥ १० ॥

---

१ अनिन्दितानि शिष्टाचाररूपाणि ॥ २ अभिचारादीनि कर्माणि शत्रुवधद्वारा नरकप्रदत्वेन निन्दितानि ॥ विषयाकृष्टचित्तस्य मोक्षेच्छावतो मन्दाधिकारिणः कर्मण्येवाधिकारः ॥

---

(१) तैत्तिरीयोपनिषद् व० १ । अ० १० । प० ३० । पृ० २ । पं० ३ ॥

(२) अक्ष्युपनिषद् श्लो० ४ ।५ । प० ६८४ । पृ० १ । पं० १ ॥

(१) सकलवेदशास्त्रसिद्धान्तरहस्यजन्मजन्माभ्यस्तात्यन्तोत्कृष्टसुकृतपरिपाकवशात्सद्भिः सह सङ्गो जायते तस्माद्विधिनिषेधविवेको भवति ततस्सदाचारप्रवृत्तिर्जायते ॥ ११ ॥

अथ सदाचारेषु कर्मयोगस्वरूपम् ।

(२) कर्मकर्त्तव्यमित्येव विहितेष्वेव कर्मसु ।
बन्धनम्मनसो नित्यं कर्मयोगस्स उच्यते॥१२॥

अथ कर्मलक्षणम् ।

(३) क्रियमाणानीन्द्रियैः कर्माण्यहं करोमीत्यध्यात्मनिष्ठतया कृतं कर्मैव कर्म ॥ १३ ॥

---

१ वेदविहितस्वधर्माचरणं सदाचारः॥ अथ सदाचारप्रसङ्गेन दुराचारशिष्टाचारावुच्येते ॥ शास्त्रप्रतिषिद्धाचरणं दुराचारः॥ शास्त्रविहितप्रतिषिद्धाभ्यामभिन्नं यच्छिष्टैराचरितं तस्याचरणं शिष्टाचार इत्युच्यते॥

---

(१) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ५ । प० ४८६ । पृ० १ । पं० ६ ॥

(२) त्रिशिखीब्राह्मणोपनिषद् अ० १ । श्लो० २५ । प० ४३३ । पृ० १ । पं० १ ॥

(१) निरालम्बोपनिषद् प० ३२९ । पृ० १ । पं० ५ ॥

अथाकर्मलक्षणम् ।

कर्तृत्वभोक्तृत्वाद्यहङ्कारतयाबन्धरूपं जन्मादिकारणं नित्यनैमित्तिकयागव्रततपोदानादिषु फलाभिसन्धानं यत्तदकर्म ॥ १४ ॥

अथ बन्धप्रतिविधिः ।

( १ ) अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याऽधिगमः स्वधर्मस्यानुचरण ँ स्वधर्मस्यानुक्रमण ँ स्वधर्मस्य वा एतद्व्रतं स्तम्भंशाखे वेतराण्यनेनोर्ध्वभाग्भवत्यन्यथाऽवाङ् पतत्येष स्वधर्मोऽभिहितो यो वेदेषु १५॥

---

१-मोक्षविधिः ॥ २-तृणशलाके वेत्यर्थः ॥

३-अधः ॥ ४-स्वस्य वेदोक्तधर्मः ॥ अथ तत्कर्त्तव्यतायां बृहन्नारदीयपुराणोक्तश्लोकाः ॥ पुनर्ग्रामाः पुनर्वित्तं पुनः पुत्राः पुनर्गृहम् ॥ पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ तद्रक्षितन्तु धर्मार्थे धर्मो ज्ञानार्थमेव हि ॥ ज्ञानेन सुलभो मोक्षस्तस्माद्धर्मं समाचरेत् ॥ देहरूपस्य वृक्षस्य फलं धर्म्मः सनातनः ॥

---

( १ ) मैत्रायण्युपनिषद् प्र० ४ । खं० ३ । प० २४३ । पृ० १ । पं० ४ ॥

अथ धर्मस्य कर्त्तव्यतामाह ।

## ( १ ) धर्म्मंश्चर धर्म्मान्न प्रमदितव्यम् ॥ १८ ॥

–धर्महीनस्तु यो देहो निष्फलो वन्ध्यवृक्षवत् ॥ न माता च सहायार्थे न कलत्रसुतादयः ॥ न पिता सोदरा वित्तं धर्मस्तिष्ठति केवलम् ॥ जरा व्याघ्रीव भयदा व्याधयः शत्रवो यथा ॥ आयुर्याति प्रतिदिनं भग्नभाण्डात्पयो यथा ॥ तरङ्गतरला लक्ष्मीर्यौवनं कुसुमोपमम् ॥ विषयाः स्वप्नविषया इव सर्वे निरर्थकाः ॥ चलं वित्तं चलं चित्तं चलं संसारजं सुखम् ॥ एवं ज्ञात्वा विरक्तः सन् धर्माभ्यासपरो भवेत् ॥ अर्धग्रस्तोऽहिना भेको मक्षिकामत्तुमिच्छति ॥ कालग्रस्तस्तथा जीवः परपीडाधनाहृतः ॥ मृत्युग्रस्तायुषः पुंसः किं सुखं हर्षयत्यहो ॥ आघातं नीयमानस्य बद्धस्येव निरर्थकम् ॥ धर्मार्थश्च यदा चित्तं न वित्तं सुलभं तदा ॥ यदा वित्तं न च तदा चित्तं धर्मोन्मुखं भवेत् ॥ वित्तचित्ते यदा स्यातां सत्पात्रन्न तदा लभेत् ॥ एतात्रितयसंबन्धो यदा काले तु सम्भवेत् ॥ अविचार्य तदा धर्मं यः करोति स बुद्धिमान् ॥ वित्तप्राचुर्यसंसाध्यधर्माः सन्ति सहस्रशः ॥

१—श्रुतिविहिताऽग्निहोत्रादिरूपं सर्वश्रौतधर्मम् ॥ चोदनालक्षणोऽर्थो धर्म इति जैमिनिनोक्तम् ।

२—धर्मशब्दस्यानुष्ठेयविषयत्वादननुष्ठानरूपः प्रमादो न कर्तव्यः ॥ श्रीमद्भागवते उक्तः—तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

( १ ) तैत्तिरीयोपनिषत् शीक्षावली १ । अनु० १० । प० । ३० । पृ० १ पं ८ । ९ ॥

अथ धर्मलक्षणम् ।

(१) धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥ ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ १७ ॥

अथ धर्मस्कन्धानाह ।

(२) त्रयो धर्मस्कन्धाः ॥ यशोऽध्ययनं दानमिति प्रथमः ॥ तप एव द्वितीयो ब्रह्मचार्या-

---

१ लक्ष्यते धर्म एभिरिति । अथ धर्मलक्षणेषु बृहन्नारदीयोक्तश्लोकाः । अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ॥ शमो दानं यथाशक्ति गार्हस्थो धर्म उच्यते ॥ परदारेष्वसंसर्गो धर्म्मस्त्रीपरिरक्षणम् ॥ अदत्तादानविरमो मधुमांसविवर्जनम् ॥ एष पञ्चविधो धर्मो बहुशाखः सुखोदयः ॥ सत्येनोत्पद्यते धर्मो दया दानाच्च वर्द्धते ॥ क्षमया रक्ष्यते धर्मः क्रोधाद्धर्मो विनश्यति ॥ इति ॥ अथ धर्मोल्लंघने दोषो विष्णुधर्मोत्तरे उक्तः । श्रुतिस्मृती ममैवाऽऽज्ञे यस्ते उल्लंघ्य वर्तते ॥ इति विष्णुधर्मोत्तरे—आज्ञाछेदी मम द्वेषी स मद्भक्तो न मे प्रियः ॥ स्मृ० ॥ अष्टादशपुराणानां व्यासस्य वचनद्वयम् ॥ परोपकारः पुण्याय पापाय परपीडनम् ॥ ॥

---

( १ ) नारदपरिव्राजकोपनिषद् उप० ३ ॥ श्लो० २४ । प० ४०२ । पृ० २ । पं० २ ॥

( २ ) छान्दोग्योपनिषत् प्रपाठ २ । खं० २३ । प० ५६ । पृ० १ । पं० ६ ॥

चार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य-
कुलेवसादयन्त्सर्व एते पुण्यलोका भवन्ति ब्र-
ह्मसꣳस्थोऽमृतत्वमेति ॥ १८ ॥

(१) नस्वधर्मातिक्रमेणाश्रमी भवत्याश्रमेष्वे-
वानवस्थस्तपस्वी चेदुच्यत इत्येतदयुक्तं ना-
तपस्कस्याऽऽत्मज्ञानेऽधिगमः कर्मसिद्धि-
र्वेति ॥ १९ ॥

अथ वर्णानामाश्रमसंख्यामाह ।

(२) चत्वारो ब्राह्मणस्य त्रयो राजन्यस्य द्वौ
वैश्यस्य ॥ २० ॥

अथ धर्मादीनां फलान्याह ।

(३) धर्मेण पापमपनुदति ॥ २१ ॥

---

१ जीवनपर्यन्तम् ॥ २ शरीरम् ॥ ३ क्षपणं कुर्वन् ॥ ४ स्वधर्मत्यागेन ॥ ५ अस्थितः ॥

---

(१) मैत्रायण्युपनिषत् प्रपाठ ४ । खं० ३ । प० २४३ । पृ० १ । पं० ६ ।

(२ । ३) चिद्घनानन्दस्वामिकृतगीताभाष्यम् ॥

(१) तपसा प्राप्यते सत्त्वं सत्त्वात्सम्प्राप्यते मनः ॥ मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्त्तत इति ॥ २२ ॥

(२) सदाचारादखिलदुरितक्षयो भवति तस्मादन्तःकरणमतिनिर्मलम्भवति ॥ २३ ॥

इति कर्मवाक्यानि ॥

अथ साङ्गभक्त्युत्पत्तिक्रमस्तत्फलञ्चाह ।

(३) ततः सद्गुरुकटाक्षमन्तःकरणमाकाङ्-

१—साधुरेव सद्गुरुस्तस्य लक्षणं श्रीमद्भागवते उक्तम्-तं साधु मन्ये सुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वाऽऽत्मपातं गृहमन्धकूपं वनङ्गतो यद्धरिमाश्रयेत ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् ॥ शीतं भयं तमोप्येति साधून्संसेवतस्तथा इति ॥ ॥

(१) मैत्रायण्युपनिषत्प्रपाठ ४ । खं० ३ । प० २४३ पृ० १ । पं० ५ ॥

(२) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ५ । प० ४८३ । पृ० १ । पं० ८ ॥

(३) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ५ । प० ४८३ । पृ० १२ । पं० १४ ॥

क्षति ॥ यदा सद्गुरुकटाक्षो भवति तदा भगवत्कथाश्रवणध्यानादौ श्रद्धा जायते ॥ २४ ॥ तस्माद्धृदयस्थितानादिदुर्वासनाग्रन्थिविनाशो भवति ततो हृदयस्थिताः कामाः सर्वे विनश्यन्ति ॥ २५ ॥

---

१—श्रवणध्यानादिपदेन नवधा भक्तिर्लक्ष्यते अत्रार्थं श्रीमद्भागवतोक्तश्लोकाः । श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने प्रह्लादःस्मरणेऽघ्रिपद्मभजने लक्ष्मीः पृथुः पूजने ॥ अक्रूरस्त्वभिवन्दने कपिपतिर्दास्ये च सख्येऽर्जुनः सर्वस्वात्मसमर्पणे बलिरभूत्कैवल्यमेते विदुः ॥ ॥ स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ॥ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराऽच्युतसत्कथोदये ॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रोपस्पर्शेऽङ्गसङ्गम् ॥ घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां समर्पिते ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदानुवन्दने ॥ कामञ्च दास्ये नतु कामकामया यथोत्तमश्लोकगुणाश्रया मतिः ॥ ॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् । क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ॥ अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् । संकीर्तितमघं पुंसो दहत्येधो यथाऽनलः ॥ ॥ सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ॥ न

तस्माद्धृदयपुण्डरीककर्णिकायाम्परमात्माऽऽ-
विर्भावो भवति ततो दृढतरा वैष्णवी

ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्त्यपि चीर्णनिष्कृताः ॥ लक्ष्मीवाक्यम्-मत्प्राप्तयेऽजेशसुरादयः प्रभोऽतप्यन्त उग्रं तप ऐन्द्रियेऽपि यः ॥ ऋते भवत्पादपरायणान्न मां विशन्त्यहं त्वद्धृदया यतोऽजितः ॥ यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ॥ प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ खं वायुमग्निं सलिलं महीञ्च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ॥ तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥ तावन्मोहोंघ्रिनिगडो यावत्कृष्ण न ते जनाः ॥ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ॥ तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतिस्वभावात् ॥ करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ॥ प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ॥ तदाऽमृतत्वं प्रतिपद्यमानो मदात्मभूयाय च कल्पते वै ॥ धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षात्रयी न यदसौ विविधा च वार्त्ता ॥ मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी

भक्तिर्जायते ॥ २६ ॥

( १ ) सर्वेषामधिकारिणामनधिकारिणाम्भक्तियोग एव प्रशस्यते भक्तियोगो निरुपद्रवः ॥ २७ ॥

---

–च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तम् ॥ अकामः सर्वकामो वा मोक्षकाम उदारधीः ॥ तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥ ॥

१–भज, सेवायाम् । भजनं भक्तिः । तल्लक्षणं शाण्डिल्यमुनिनोक्तम्—"साऽनुरक्तिरीश्वरे" अस्यार्थः—ईश्वरे परमगुरौ अनुदिनं चन्द्रकलेव वर्द्धमाना या अनुरक्तिः अहैतुकी परमा प्रीतिः सा परा भक्तिः । अथ या सकामा सा अपरा भक्तिरित्यर्थः ॥ अत्र श्रीमद्भागवतोक्तश्लोकाः ॥ स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ॥ अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति ॥ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ॥ हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ विषयाविष्टचित्तानां विष्णवावेशः सुदूरतः ॥ वारुणीदिग्गतं वस्तु व्रजेन्नैन्द्रीं किमाप्नुयात् ॥ कौमारमाचरेत्प्राज्ञो धर्मान्भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिताः । वासुदेवपरा मर्त्यास्ते कृतार्था न संशयः ॥ ॥

---

( १ ) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ८ । प० ५०५ । पृ० १ । पं० ६ ॥

(१) भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान्सर्वान्परिपालयति, सर्वाभीष्टान्प्रयच्छति मोक्षं दापयति ॥ २८ ॥ (२) कारणेन विना कार्य्यन्नोदेति भक्त्या विना ब्रह्मज्ञानं कदाऽपि नो जायते-

---

१-२-अत्रार्थे श्रीमद्भागवतोक्तश्लोकौ॥बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ॥ प्रायः प्रगल्भया भक्त्या विषयैर्नानुभूयते ॥ न तस्य कश्चिद्दयितः सुहृत्तमो नचाप्रियो द्वेष्य उपेक्ष्य एव च ॥ तथाऽपि भक्ता भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥

३-अत्रार्थे श्रीमद्भागवतोक्तश्लोकौ ॥ श्रेयःसृतिम्भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषाऽवघातिनाम् ॥ ॥ यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासतेऽसुराः॥ हरावभक्तस्य कुतो महद्गुणा मनोरथे नासति धावतो बहिः ॥

---

( १ । २ ) त्रिपाद्विभूतिमहानारायणोपनिषद्० अ० ८ । प० ५०५ । पृ० १ । २ । पं० ८ । १ ॥

तस्मात्त्वमपि सर्वोपायान्परित्यज्य भक्तिमा-
श्रय भक्तिनिष्ठो भव।

(१) भक्त्यसाध्यं न किञ्चिदस्ति ॥ २९ ॥

(२) दिनकरकिरणैर्हि शार्वरन्तमो निबिडंत-

१–सर्वं वस्तु भक्तिसाध्यमेवेत्यर्थः । अत्रार्थे श्रीमद्भागवतोक्तश्लोकाः ॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ न साधयति मां योगो न साङ्ख्यं कर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता॥ भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता॥ मद्भक्त्यापेतमात्मानं न सम्यक्प्राप्नुयादिह ॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनाऽऽनन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाऽऽशयः ॥ वाग्गद्गदा द्रवते यस्य चित्तं हसत्यभीक्ष्णं रुदति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनम्पुनाति ॥ २–रात्रिसंबन्ध्यन्धकारः ॥ ३–अतिघनतरम् ॥

(१) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ८। प० ५०५। पृ० २। पं० ३॥

(२) वाराहोपनिषद् अ० २ श्लो० ११। १२। प०८१। पृ० १। पं० ९॥

मञ्झटिति प्रणाशमेति ॥ घनंतरभवकारण-
न्तमो यद्ध हि दिनंकृत्प्रभया न चांन्तरेण॥३०॥
मम चरणस्मरणेन पूजया च स्वकंतमसः परि-
मुच्यते हि जन्तुः ॥ नहि मरणप्रभवप्रणाशहे-
तु मम चरणस्मरणाद्दंतेऽस्ति किञ्चित् ॥ ३१ ॥

१–शीघ्रम् ॥ २–अतिघनाज्ञानरूपान्धकारः ॥ ३–हरिरूपसूर्यप्रभया ॥ ४–नान्येन न साधनान्तरेणेत्यर्थः ॥ अत्रार्थे श्रीमद्भागवतोक्तश्लोकाः॥ यथाग्निना हेम मलं जहाति ध्मातः पुनः स्वं भजते च रूपम् ॥ आत्मा तु कर्माऽनुशयं विधूय मद्भक्तियोगेन भजेदथो माम् ॥ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ नाहमात्मानमाशासे मद्भक्तैस्साधुभिर्विना ॥ श्रियं चात्यन्तिकीं ब्रह्मन्येषां गतिरहं परा ॥ ये दाराऽऽगारपुत्राप्तान्प्राणान्वित्तमिमं परम् ॥ हित्वा मां शरणं याताः कथन्तांस्त्यक्तुमुत्सहे ॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः ॥ वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥ नेच्छन्ति सेवया पूर्णाः किमन्यत्कामविप्लवम् ॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ज्ञानं गणेशो मम चक्षुरर्कः शिवो ममात्मा मम शक्तिराद्या ॥ विभेदबुद्ध्या मयि ये भजन्ति ममाङ्गहीनं कलयन्ति मन्दाः ॥ ५–स्वकीयात्माऽऽवरणरूपाऽज्ञानात् ॥ ६–ऋते विना ॥

आदरेण यथा स्तौति धनवन्तन्धनेच्छया॥ तथा चेद्विश्वकर्त्तारं को न मुच्येत बन्धनात्॥३२॥

(१) चतुर्मुखादीनां सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिरपि मोक्षो न विद्यते॥३३॥

अथ वैकुण्ठस्वरूपम्।

(२) मध्यमपादमध्यप्रदेशेऽमिततेजःप्रवाहाऽऽकारतया नित्यवैकुण्ठं विभाति दुग्धोदधिमध्यस्थिताऽमृताऽमृतकलशवद्वैष्णवं धाम परमं संदृश्यते ॥ ३४ ॥

अथ ध्यानालम्बनमाह।

(३) समस्तकर्मातिदूरतया करचरणाऽऽदिमूर्त्तिविशिष्टं मण्डलाऽऽद्यालम्बनं सालम्बयोगः ॥ ३५ ॥

अथाऽविद्यासाकारस्याऽनित्यत्वमाह।

(४) आविद्यकमखिलकार्यकारणजालमवि-

(१।२) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ८। १। प० ५०५। ४७१ पृ० १। पं० ९।। २॥

(३) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ८। प० ५०५। पृ० १। पं० २॥

(४) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० २। प० ४७४। पृ० १। पं० ९॥

द्यापाद एव नाऽन्यत्र ॥ तस्मात्समस्ताऽविद्योपाधिस्साऽऽकारस्साऽवयव एव ॥ साऽवयवत्वादवश्यमनित्यम्भवत्येव ॥ ३६ ॥

अथ विद्यासाकारस्य नित्यत्वमाह ।

( १ ) अद्वैताऽखण्डपरिपूर्णनिरतिशयपरमाऽऽनन्दशुद्धबुद्धमुक्तसत्याऽऽत्मकब्रह्मचैतन्यसाऽऽकारत्वात्, निरुपाऽऽधिकसाऽऽकारस्य नित्यत्वं सिद्धमेव ॥ ३७ ॥

अथाविद्याविद्यासाकारयोर्दृष्टान्तमाह ।

( २ ) यथा पृथिव्यादीनां व्यापकशरीराणां देवविशेषाणाञ्च तद्विलक्षणतदभिन्नव्यापकाऽपरिच्छिन्नानिजमूर्त्याऽऽकारदेवताः श्रूयन्ते सर्वत्र तद्वत्परब्रह्मणस्सर्वाऽऽत्मकस्य साऽऽकारनिराकारभेदविरोधो नास्त्येव विविधविचित्राऽनन्तशक्तेः परब्रह्मणस्स्वरूपज्ञानेन विरोधो न विद्यते तदभावे सत्यनन्तविरोधो विभाति ॥ ३८ ॥

( १-२ ) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० २ । पृ० ४७४ । ४७५ । पृ० २ । पं० ८ । १ । पं० ४ ॥

अथ साकारग्रहणे हेतुमाह ।

( १ ) चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः ॥ उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ३९ ॥

अथ श्रीरामस्य परत्वमाह ।

( २ ) चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ ॥ रघोः कुलेऽखिलं राति राजते यो महिस्थितः ॥ स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ॥ ४० ॥

---

१–सर्वैश्वर्यम् । २–ददाति भरताय वा भक्तायेति शेषः । २–रेफाऽऽकारयोस्सर्ववाक्कारणत्वात्सर्वनामात्मकं रामशब्दः ॥ नामार्थयोर्विवर्त्ताधिष्ठानयोश्चाभेदाद्राम एव परब्रह्मेत्यर्थः ॥ रमु,–क्रीडायाम् ॥ इति व्युत्पत्त्या राम एव सर्वात्मेत्यर्थः । पद्मपुराणोक्तश्लोकाः–नाम चिन्तामणी राम चैतन्यपराविग्रहः । पूर्णः शुद्धो नित्ययुक्तो न भिन्नं नाम नामिनः ॥

---

( १ ) रामपूर्वतापन्युपनिषद् ।उप० १ । श्लो० ७ । प० ५२४पृ० १ पं० ३ ॥

(२) रामपूर्वतापिन्युप० उप०१श्लो० १।२।प० ५२३।पृ०२। पं०५।

( १ ) राम एव परम्ब्रह्म राम एव परन्तपः ॥
राम एव परन्तत्त्वं श्रीरामो ब्रह्मतारकम् ॥४१॥

अथ रामनामार्थः ।

( २ ) रमन्ते योगिनोऽनन्ते नित्याऽऽनन्दे चिदात्मनि ॥ इति रामपदेनाऽसौ परं ब्रह्माऽभिधीयते ॥ ४२ ॥

---

–अतः श्रीरामनामादि न भवेद्ग्राह्यमिन्द्रियैः ॥ स्फुरति स्वयमेवैतज्जिह्वादौ श्रवणे मुखे ॥ रामरामेति रामेति रमे रामे मनोरमे ॥ सहस्रनामतातुल्यं रामनाम वरानने ॥ जपतः सर्ववेदाँश्च सर्वमन्त्राँश्च पार्वति ॥ तस्मात्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते ॥ येये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलम् ॥ तत्सर्वं सिद्धयति क्षिप्रं रामनाम्नश्च कीर्तनात् ॥ अगस्तिसंहितोक्तश्लोकौ ॥ राकारेण बहिर्याति मकारेण विशेत्पुनः ॥ रामरामेति सच्छब्दो जीवो जपति सर्वदा ॥ दैनन्दिनन्तु दुरितं पक्षमासर्तुवर्षजम् ॥ सर्वं दहति निश्शेषन्तूलाचलमिवानलः ॥ प्रह्लादवाक्यम्-रामनाम जपतां कुतो भयं सर्वतापशमनैकभेषजम् ॥ पश्य तात मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुना ॥

---

( १ ) रामरहस्योपनि० अ० १ श्लो० ५।प० ५११। पृ० १पं० ३।
( २ ) रामतापिन्युप० उप० १ प० ५३१ । पृ० १ । पं० ७ ।

(१) धर्ममार्गं चरित्रेण ज्ञानमार्गञ्च नामतः॥ तथा ध्यानेन वैराग्यमैश्वर्यं यस्य पूजनात् ॥ ४३ ॥

अथ साङ्गश्रीरामस्य प्रणवाङ्गत्वमाह।

( २ ) अकाराक्षरसम्भूतस्सौमित्रिर्विश्वभावनः ॥ उकाराक्षरसम्भूतश्शत्रुघ्नस्तैजसात्मकः ॥ ४४ ॥

प्राऽऽज्ञाऽऽत्मकस्तु भरतो मकाराऽक्षरसम्भवः। अर्धमात्राऽऽत्मको रामो ब्रह्माऽऽनन्दैकविग्रहः ॥ ४५ ॥

अथ श्रीसीतायाः स्वरूपम्।

( ३ ) चतुर्भुजाऽभयवरदपद्मधरा किरीटाभरणयुता ॥

( ४ ) भगवत्सहचारिणी अनपायिनी अनवरतसहाश्रयिणी ॥ ४६ ॥

---

( १ ) रामपूर्वतापिन्युपनिषद् उप० १। प० ५२४ पृ० २ पं० ९॥

( २ ) रामोत्तरतापिन्युपानिषद् उ० १। प०।०५३१। पृ० ७॥

( ३।४ ) सीतोपनिषत् प० ४४५। ४४४। पृ० १। २। पं० ३॥

(१) श्रीरामसान्निध्यवशाज्जगदाधार[१]कारिणी ॥ उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ सा सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता ॥ ४७ ॥

अथ सांगध्यानप्रकारमाह ।

( २ ) विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ॥ ४८ ॥

( ३ ) त्रि[२]रुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य ॥ ४९ ॥

(४) अष्टपत्रं तु हृत्पद्मं द्वात्रिंशत्केसरान्वितम् ॥ तस्य मध्ये स्थितो भानुर्भानुमध्यगतः शशी ५०

---

१-जगदानन्दकारिणीतिपाठान्तरम् ॥

२--कट्यूरुशिरांसि । उरोमुखकटिग्रीवं किञ्चिद्धृदयमुन्नतमिति क्षुरिकोक्तात् ॥

---

( १ ) रामोत्तरतापिन्युपनिषद् उप० १ । श्लो० ३ । ४ प० ५३१ । पृ० २ । पं० १ ॥

( २ ) कैवल्योपनिषत् श्रु० ४ । प० १९ । पृ० १ । पं० २ ॥

( ३ ) श्वेताश्वतरोपनिषत् अ० २ । मं० ८ । प० १८० । पृ०२ । पं० ७ ॥

( ४ ) ध्यानबिन्दूपनिषत् श्लो० २६ । २७ । २८ । प० ३७२ । पृ० २ । पं० ८ ॥

शशिमध्यगतो वह्निर्वह्निमध्यगता प्रभा ॥
प्रभामध्यगतं पीठं नानारत्नप्रवेष्टितम् ॥८१॥
तस्य मध्यगतं देवं वासुदेवं निरञ्जनम् ॥
श्रीवत्सकौस्तुभोरस्कं मुक्तामणिविभूषितम् ॥
शुद्धस्फटिकसंकाशं चन्द्रकोटिसमप्रभम् ८२॥
(१) कालाम्भोधरकान्तिकान्तमनिशं वीरा-
ऽऽसनाऽध्यासितं मुद्रां ज्ञानमयीं दधानमपरं
हस्ताऽम्बुजं जानुनि॥सीतां पार्श्वगतां सरोरुह-
करां विद्युन्निभां राघवं पश्यन्तं मुकुटाऽङ्गदाऽऽ-
दिविविधाऽऽकल्पोज्ज्वलाऽङ्गं भजे ॥ ८३ ॥

अथ ध्यानफलम् ।

(२) यदि शैलसमं पापं विस्तीर्णं बहुयोजनम्।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन८४

---

१--विष्णुध्याने व्यासोक्तश्लोकः ॥ आलोड्य सर्वशास्त्राणि विचार्यैव पुनः पुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

---

(१) रामरहस्योपनिषद् अ० १। श्रु० २४। प० ५१३। पृ०। २ पं० ७॥

(२) ध्यानविन्दूपनिषद् श्लो० १। प० ३७१ पृ० १। पं० ७॥

अथ मन्त्रशब्दार्थे वाच्यवाचकभावश्च ।

(१) क्रियाकर्मेज्यकर्त्तॄणामर्थं मन्त्रो वदत्यथ॥ मननात्त्राणनान्मन्त्रस्सर्ववाच्यस्य वाचकः ९५ (२) मन्त्रोऽयं वाचको रामो वाच्यस्स्याद्योग एतयोः ॥ फलदश्चैव सर्वेषां साधकानां न संशयः ॥ ९६ ॥ यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् ॥ तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ९७ ॥

अथ मन्त्रोद्धारः ।

( ३ ) सहोवाच याज्ञवल्क्यस्तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घाऽनलं पुनर्माय नम इति९८॥

अथ षडक्षरमन्त्रार्थः ।

( ४ ) स्वप्रकाशः परञ्ज्योतिस्स्वाऽनुभूत्यैक-

---

(१) रामपूर्वतापिन्युपनिषद् श्लो० १२ । प० ५२४। पृ० १।पं०९।

(२) रामपूर्वतापिन्युपनिषद् प० ५२५ पृ० १ । पं० २ ।

(३) रामोत्तरतापिन्युपनिषद् प० ५३०।पृ०२।पं०६।श्लो० २।३॥

(४) रामोत्तरतापिन्युपनिषद् प० ५३४ । पृ० २ । पं० ९ ॥

चिन्मयः ॥ तदेव रामचन्द्रस्य मनोराद्यक्षरस्स्मृतः ॥ ५९ ॥ अखण्डैकरसाऽऽनन्दस्तारकब्रह्मवाचकः । रामायेति सुविज्ञेयस्सत्याऽऽनन्दचिदात्मकः ॥ ६० ॥ नमःपदं सुविज्ञेयं पूर्णाऽऽनन्दैककारणम् । सदा नमन्ति हृदयं सर्वे देवा मुमुक्षवः ॥ ६१ ॥

अथ तत्फलम् ।

(१) षडक्षरो यं मन्त्रः स्यात्सर्वाघौघनिवारणः । मन्त्रराज इति प्रोक्तस्सर्वेषामुत्तमोत्तमः ॥ ६२ ॥

(२) गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः ॥ वैष्णवेषु च सर्वेषु राममन्त्रः फलाधिकः ॥ गणपत्यादिमन्त्रेषु कोटिकोटिगुणाधिकः ६३ ॥

---

(१) रामोत्तरता० प० ५३५ । पृ० २ । पं० ३ ॥
(२) रामोत्तरता० प० ५३५ । पृ० २ । पं० १ ॥

( १ ) गर्भजन्मजरामरणसंसारमहद्भयात्स-
न्तारयतीति ॥
तस्मादुच्यते षडक्षरं तारकमिति ॥ ६४ ॥
( २ ) तदेव तारकं ब्रह्म तदेवोपासितव्यमिति
ज्ञेयम् ॥ ६५ ॥
( ३ ) ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकि-
कम् । कैवल्यं भगवत्त्वञ्च मन्त्रोऽयं साधयि-
ष्यति ॥ ६६ ॥

अथ ऋष्यादिकानाह ।

( ४ ) ब्रह्मा मुनिश्चगायत्रं छन्दो रामोऽस्य
देवता । दीर्घाऽर्धेन्दुयुजाङ्गानि कुर्याद्ब्रह्मात्मनो
मनोः ॥बीजशक्त्यादिबीजेन इष्टार्थे विनियो-
जयेत् ॥ ६७ ॥

अथ राममन्त्रजपफलेषु हनुमद्वाक्यम् ।

( ५ ) यो राममन्त्रञ्जपति तस्य शुभकरोऽहं
स्याम् ॥ ६८ ॥

---

( १ । २ । ३ ) रामोत्तरतापिन्युपनिषद् ॥ प० ५३१ । ५३५ । पृ० १ । २ । पं० २ । ९ ॥
( ४ ) रामरहस्योप० प० ५१२ । पृ० १ । पं० ९ ॥
( ५ )–रामरहस्योपनिषत् प० ५११ । पृ० २ । पं० ३ ॥

अथ सेतिहासनारायणनामोच्चारणमाहात्म्यम् ।

(१) द्वापरान्ते नारदो ब्रह्माणञ्जगाम कथम्भगवन्गाम्पर्यटन्कलिं सन्तरेयमिति॥सहोवाच ब्रह्मा साधु पृष्टोऽस्मि ॥ सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि ॥ भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति ॥ नारदः पुनः पप्रच्छ तन्नाम किमिति ॥ सहोवाच हिरण्यगर्भः ॥ हरे राम हरे राम राम राम हरे हरे । हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥ ६९ ॥ इति षोडशकं नाम्नां कलिकल्मषनाशनम् ॥ नातः परतरोपायः सर्ववेदेषु दृश्यते ॥ ७० ॥

१–कीर्त्तने विष्णुकल्पोक्तश्लोकः-गोविन्द केशव मुकुन्द हरे मुरारे लक्ष्मीनिवास मधुसूदन कृष्ण विष्णो ॥ श्रीरामचन्द्र पुरुषोत्तम वासुदेव नारायणाच्युत जनार्दन हंस सत्य॥ तत्फलं विष्णुपुराणे उक्तम्—हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः॥

(१) कलिसन्तारणोप० प० ८४१।पृ० २। पं० ९ ॥

इति षोडशकलाऽऽवृतस्य जीवस्याऽऽवरणविनाशनम् ॥ ततः प्रकाशते परब्रह्म मेघाऽपाये रविरश्मिमण्डलीवेति ॥ ७१ ॥ पुनर्नारदः पप्रच्छ भगवन् कोऽस्य विधिरिति ॥ तँहोवाच नाऽस्य विधिरिति ॥ सर्वदा शुचिरशुचिर्वा पठन्ब्राह्मणस्सलोकताँ समीपताँ सरूपताँ सायुज्यतामेति ॥७२॥यदाऽस्य षोडशीकस्य सार्धत्रिकोटिर्जपतितदाब्रह्महत्यांतरति॥ स्वर्णस्तेयात्पूतो भवति ॥ पितृदेवमनुष्याणामपकारात्पूतो भवति ॥ सर्वधर्मपरित्यागपापात्सद्यश्शुचितामाप्नुयात् ॥ सद्यो मुच्यते सद्यो मुच्यते ॥ इत्युपनिषत् ॥ ७३ ॥ इति भक्तिवाक्यानि ॥

---

श्रीमद्भागवतोक्तश्लोकाः ॥ वासुदेवपरा वेदा वासुदेवपरा मखाः ॥ वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ वासुदेवपरं ज्ञानं वासुदेपरन्तपः ॥ वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ विले बतोरुक्रम विक्रमान्ये

# अथ भगवत्कीर्त्तनात्मकगाथाद्वयम् ।

जयजय राम मुरारे ।

चिदानन्द माधव परमेश्वर ब्रह्माद्वयाखण्ड जगदीश्वर कूटस्थाचल निष्क्रिय रघुवर स्वप्रकाश सुरवन्द्य हरे ॥ अजानन्त रावणकुलनाशक ज्योतीरूप सकलमुनिरक्षक विष्णुदेव सेवकसुखकारक सत्याच्युत जय दैत्यारे॥ रामचन्द्र पुरुषोत्तम श्रीधर रघुनन्दन वरचापबाणधर सीतेश्वर करुणारत्नाकर राजवर्य

---

–न शृण्वतः कर्णपुटे नरस्य ॥ जिह्वाऽसती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥ भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गन्न नमेन्मुकुन्दम् ॥ शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥ बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये ॥ पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ जीवच्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु॥ श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसँश्छवो यस्तु न वेद गन्धम् ॥ तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः॥ न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥

जयजय नृहरे ॥ नारायण केशव मधुसूदन मत्स्य कूर्म वर सूकर वामन शरणागत बबुनन्दनपावन त्राहित्राहि जय दाशरथे ॥ १ ॥

जयजय कृष्ण अघारे ।

परानन्दघन पूर्ण निरञ्जन मायोपाधिरूप यदुनन्दन परब्रह्म वृन्दावनरञ्जन सुरवरेश जयजय श्रीहरे ॥ गोविन्दाच्युत गोपसखावन यदुकुलकमलदिवाकर पावन नारायण गोपीजनरञ्जन वंशीधर जय कंसारे ॥ चक्रकमलवरशङ्खगदाधर कोटिकामसमसुन्दर श्रीकर पीताम्बर वरकीटमुकुटधरदेववर्य जय देव हरे॥ श्रीवत्साङ्कित कौस्तुभगलधृक् नीलमणिप्रभ त्रिभुवनपोषक कृष्णचन्द्र बबुनंदनपालक पाहि पाहि मथुरेश हरे ॥ २ ॥

अथ साधनचतुष्टयोत्पत्तिमाह ।

(१) स्ववर्णाश्रमधर्मेण तपसा गुरुतोषणात् ॥
साधनं प्रभवेत्पुँसां वैराग्याऽऽदिचतुष्टयम् ७४॥

(१) वराहोपनिषत् अ० २ । श्लो० २-३ । प० ८१० । पृ० २ । पं० ७ ॥

नित्याऽनित्यविवेकश्च इहाऽमुत्रविरागता॥श-
माऽऽदिषक्कसम्पत्तिर्मुमुक्षा ताँ समभ्यसेत्७५॥

अथ नित्यानित्यविवेकवाक्यानि ।

( १ ) सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म ॥ ७६ ॥

( २ ) नेह नानास्ति किञ्चन ॥ ७७ ॥

( ३ ) ब्रह्म सत्यं जगन्मिथ्येति ॥ ७८ ॥

( ४ ) सर्पादौ रज्जुसत्तेव ब्रह्मसत्तेव केवलम् ॥ प्रपञ्चाधाररूपेण वर्त्ततेऽतो जगन्नहि ॥ ७९ ॥

( ५ ) यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम् ॥ यथा नास्ति नभोवृक्षस्तथा नास्ति जगत्स्थितिः ॥ ८० ॥ गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ॥

---

१—नानात्वं भेदः ॥

---

( १ ) बृहदारण्योपनिषद् अ० ५ । ब्राह्मण ४ श्रु० १।प०१६ । पृ० १ । पं० ८ ॥

( २ ) बृहदारण्योपनिषत् अ० ४ । ब्राह्मण ४ । श्रु० १९ । प० १५६ । पृ० १ । पं० ७ ॥

( ३ ) निरालम्बोपनिषत् अ० ३३० पृ० १ । पं० ९ ।

( ४ ) आत्मबोधोपनिषत् श्लो० १२ । प० ३९७ । पृ० १ ।पं० ९ ।

( ५ ) योगशिखोप०अ० ४ श्लो० १८।१९ प०६२२ पृ०१पं० ३ ।

वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भास्वरम् ॥ ८१ ॥

अथ वैराग्यवाक्यानि ।

( १ ) यथेह कर्मजितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यजितो लोकः क्षीयते ॥ ८२ ॥

अथ शरीरदोषानाह ।

( २ ) त्वग्मांसरुधिरस्नायुमज्जामेदोऽस्थिसंहतौ । विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ ८३ ॥

क शरीरमशेषाणां श्लेष्मादीनाम्महाचयः ।

---

१–सेवादिकर्मणा सम्पादितः २ अग्निहोत्रादिपुण्यकर्मणा सम्पादितः ॥ श्रीमद्भागवते प्रह्लादवाक्यम्–रायः कलत्रं पशवः सुतादयो गृहा महीकुञ्जरकोशभूतयः । सर्वेर्थकामाः क्षणभंगुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः ॥

---

( १ ) छान्दोग्योपनिषत् प्रपाठक ८ । ख० १ । प० ९८ । पृ० । पं १ ।

( २ ) नारदपरिव्राजकोप० उप० ४ । श्लो० २६ । २७ । २८ । प० ४०९ । पृ० २ । पं० ९ ॥

कचाङ्गशोभासौभाग्यकमनीयादयोगुणाः ८४ मांसासृक्पूयविण्मूत्रस्नायुमज्जाऽस्थिसंहतौ ॥ देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ ८५ ॥

(१) स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ॥ विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ८६ ॥

(२) जराशोकसमाविष्टं रोगायतनमातुरम् ॥ रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥८७।

(३) जातम्मृतमिदन्देहम्मातापितृमलात्मकम् ॥ सुखदुःखालयामेध्यं स्पृष्ट्वा स्नानं विधीयते ॥ ८८ ॥

---

(१) मुक्तिकोपनिषत् अध्याय २। श्लो० ६६। प० ८६४। पृ० २। पं०४॥

(२) नारदपरिव्राजकोपनि० उपदेश ३। श्लो० ४७। प० ४०८। पृ० १। पं० १॥

(३) मैत्रेयोपनिषद् अ० २। श्लो० ४।५।६। प० ३०७। पृ० १। पं० १।

धातुबद्धम्महारोगं पापमन्दिरमध्रुवम् ॥
विकाराकारविस्तीर्णं स्पृष्ट्वा स्नानं विधीयते ॥ ८९ ॥

नवद्वारमलस्रावं सदाकाले स्वभावजम् ॥
दुर्गन्धन्दुर्म्मलोपेतं स्पृष्ट्वा स्नानं विधीयते ॥ ९० ॥

( १ ) सा कालपुत्रपदवी सा महाविचिवागुरा ॥ साऽसिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ॥ ९१ ॥

अथ स्त्रीदोषानाह ।

( २ ) मांसपाञ्चालिकायास्तु यन्त्रलोकेङ्गपञ्जरे ॥ स्नाय्वस्थिग्रन्थिशालिन्यस्स्त्रियः किमिव शोभनम् ॥ ९२ ॥

त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने । समालोकय रम्यञ्चेत् किम्मुधा परिमुह्यसि ॥ ९३ ॥

( १ ) नारदपरिव्राजकोपनिषद् उपदेश ३ । श्लो० ४९ । प० ४०४ । पृ० १ । पं ३ ।

( २ ) याज्ञवल्क्योप० श्लो० ५, ६, प० ८०७ । पृ० २ । पं० ७

(१) केशकज्जलधारिण्यो दुस्पर्शा लोचनप्रियाः ॥ दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ९४ ॥

ज्वलना अतिदूरेऽपि सरसा अपि नीरसाः ॥ स्त्रियो हि नरकाग्नीनामिन्धनश्चारुदारुणम् ॥ ९५ ॥

कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ॥ नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ ९६ ॥

जन्मपल्वलमत्स्यानाञ्चित्तकर्दमचारिणाम् ॥ पुंसां दुर्वासनारज्जुर्नारीबडिशपिण्डिका ९७ ॥

सर्वेषान्दोषरत्नानां सुसमुद्गिकयाऽनया ॥ दुःखशृंखलया नित्यमलमस्तु मम स्त्रिया ॥ ९८ ॥

यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः ॥ स्त्रियन्त्यक्त्वा जगत्त्यक्तञ्जगत्त्यक्त्वा सुखी भवेत् ॥ ९९ ॥

---

(१) याज्ञवल्क्योप० श्लो० ९ । १४ । प० ८० । ८ । पृ० १ । पं० २ ॥

अथ पुत्रदोषानाह ।

( १ ) अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ॥ लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥ १०० ॥ जातस्य ग्रहरोगादिकुमारस्य च धूर्त्तता ॥ उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ १०१ ॥

यूनश्च परदारादिदारिद्र्यं च कुटुम्बिनः ॥ पुत्रदोषस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ १०२ ॥

अथैषणात्यागः ।

( २ ) ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यंचरन्ति ॥ १०३ ॥

---

( १ ) याज्ञवल्क्योपनिषत् श्लोक० १५ । १६ । १७ । प० ८०८ । पृ० २ । पं० १ ।

( २ ) बृहदारण्यक अ० ५ ब्रा० ५ श्रु० १ । प० १३८ । पृ० २ । पं० ४ ।

(१) तेन त्यक्तेन[1] भुञ्जीथा[2] मा गृधः[3] कस्य[4]स्विद्[5]धनम् ॥ १०४ ॥

अथ धनदोषमाह ।

(२) न साम्पराय[6]: प्रतिभाति[7] बालं[8] प्रमाद्यन्तं[9] वित्तमोहेन[10] मूढम् ॥ १०५ ॥

(३) चिन्तानिचयचक्राणि नाऽऽनन्दाय धनानि मे ॥ सम्प्रसूतकलत्राणि गृहाण्युग्राऽऽपदामिव ॥ १०६ ॥

---

१—एषणात्रयत्यागेन ॥ २ इदं सर्वमीश्वर एवेति बुद्धिं पालयेथाः ॥ ३ माकांक्षीः ॥ ४ । ५ कस्यापि बृहदारण्यकभाष्ये उक्तम्=किन्ते धनेन किमु बन्धुभिस्ते किन्ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क गताः पिता च ॥ ६ सम्यक् परे देहपतनादूर्ध्वं प्रीयते गम्यते इति सम्परायः परलोकः तत्प्राप्तिहेतुः शास्त्रीयसाधनविशेषः साम्परायः ॥ ७ ज्ञातो भवति ॥ ८ अविवेकिनम् ॥ ९ पुत्रपश्वादिफलेषु संलग्नचित्तम् ॥ १० धनलाभेनाविवेकेनाच्छादितान्तःकरणम् ॥

---

(१) ईशावास्यो० मं १ प १ पृ १ पं ३ ॥
(२) कठोपनिषत् अ० १ । वल्ली २ । प० ७ । पृ० ३ । पं०?।
(३) महोपानिषद् अ० ३ । श्लो० ७ । प०५७४ । पृ०१ प०३॥

( १ ) इन्द्रियाणि मनो हृत्य मनसात्मनि योजयेत् ॥ २६३ ॥

( २ ) यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥ तत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २६४ ॥

अथ साङ्गसगुणध्याननिरूपणम् ।

( ३ ) बद्ध्वा योगासनम्पूर्वं हृद्देशे हृदयाञ्जलिः ॥ नासाग्रन्यस्तनयनो जिह्वां कृत्वा च तालुनि ॥ २६५ ॥ दन्तैर्दन्तानसंस्पृश्य ऊर्ध्वकायः समाहितः ॥ संयमेच्चेन्द्रियग्राममात्मबुद्ध्या विशुद्धया ॥ २६६ ॥

( ४ ) समभ्यसेत्तथा ध्यानं घटिकाषष्टिमेव च ॥ वायुन्निरुध्य चाकाशे देवतामिष्टदामिति ॥ २६७ ॥

---

( १ ) श्रीजाबालदर्शनोप० खं० ६ । श्लो० । प० ७१० । पृ० १ । पं० ७ ॥

( २ ) योगशिखोपनिषद् अ० ३ । श्लो० १४ । प० ६२० । पृ० १ । पं० ४ ॥

( ३ ) त्रिशिखीब्राह्मणोपनिषद् श्लो० १४४ । १४५ । १४६ । प० ४४० । पृ० २ । पं० २ ॥

( ४ ) योगतत्त्वोपनिषद् श्लो० १०४ । प०३९३ । पृ०१।पं०७॥

(१) अब्जपत्रमधः पुष्पमूर्ध्वनालमधोमुखम् ॥ कदलीपुष्पसंकाशं सर्वदेवमयं शिवम् ॥ २५८ ॥ शतारं शतपत्राढ्यं विप्रकीर्णाम्बुकर्णिकम् ॥ तत्रार्कचन्द्रवह्नीनामुपर्य्युपरि चिन्तयेत् ॥ पद्मस्योद्घाटनं कृत्वा बोधचन्द्राग्निसूर्यकम् ॥ २५९ ॥

(२) हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥ अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ २६० ॥ तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ उमासहायम्परमेश्वरम्प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ २६१ ॥

(३) स्फटिकरजतवर्णम्मौक्तिकीमक्षमालाममृतकलशविद्यां ज्ञानमुद्रां कराग्रे ॥ दधतमुर-

(१) ध्यानबिन्दूपनि० श्लो० ३३ । ३४ । ३५ । प० ३७३ । पृ० १ । पं० ७ ॥

(२) कैवल्योपनिषद् श्लो० ४ । ५ । ६ । प० १९० । पृ० १ । पं० ४ ॥

(३) दक्षिणामूर्त्युप० प० ४६४ । पृ० १ । पं० १ ॥

गकक्ष्यं चन्द्रचूडं त्रिनेत्रं विधृतविविधभूषं दक्षिणामूर्त्ति [illegible] ॥ २६२ ॥

अथवा विष्णुध्यानम् ।

(१) अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम् ॥ दिव्यध्वजाऽऽतपत्रैस्तु चिह्नितं चरणद्वयम् ॥ २६३ ॥ श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ॥ चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदाऽन्वितम् ॥ २६४ ॥ सुकेयूरान्वितं बाहुं कण्ठमालासुशोभितम् ॥ द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम् ॥ २६५ ॥ हिरण्मयं सौम्यतनुं स्वभक्तायाऽभयप्रदम् ॥ ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरन्तु वा ॥ २६६ ॥

(२) सगुणं ध्यानमेतत्स्यादणिमादिगुणप्रदम् ॥ २६७ ॥

(१) गोपालोत्तरतापिन्युप० श्लो० १५-१९ । प० ८०० । पृ० २ । पं० ६ ।

(२) योगतत्त्वोप० श्लो० १०५ । प० ३९३ । पृ० १ । पं० ८ ॥

अथ निर्गुणध्याननिरूपणम् ।

( १ ) निर्गुणमात्मयाथात्म्यम् ॥ २६८ ॥

( २ ) हृत्पुण्डरीकमध्ये तु भावयेत्परमेश्वरम् ॥ साक्षिणं बुद्धिवृत्तस्य परमप्रेमगोचरम् ॥ २६९ ॥ अगोचरं मनोवाचामवधूतादिसंप्लवम् ॥ सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ २७० ॥ अहेयमनुपादेयमसामान्यविशेषणम् ॥ ध्रुवं स्तिमितिगम्भीरं न तेजो न तमस्ततम् ॥२७१॥ निर्विकल्पं निराभासं निर्वाणमयसंविदम् ॥ ॥ २७२ ॥ नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः संविभुश्चाद्वितीयः ॥ आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २७३ ॥

( ३ ) सर्वभूतेषु चैतन्यैकतानताध्यानम् ॥ २७४ ॥

---

( १ ) शाण्डिल्योप० अ० १ प० ५५५ । पृ० २ । पं० १ ॥

( २ ) मैत्रायण्युप० प्र० १ । श्रु० ८-११ । प० ३०६ । पृ० १ । पं० ४ ॥

( ३ ) मण्डलब्रा० १ । श्रु० ८ । प० ४५६ । पृ० २ । पं० ९ ॥

( १ ) अङ्गुष्ठमात्रमात्मानमधूमज्ज्योतिरूत्तमम् ॥ प्रकाशयन्तमन्तस्थं ध्यायेत् कूटस्थमव्ययम् ॥ २७५ ॥

( २ ) निर्गुणध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥ २७६ ॥

अथ समाधिलक्षणम् ।

दिनद्वादशकेनैव समाधिं समवाप्नुयात् ॥ वायुन्निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥ समाधिः समतावस्था जीवात्मपरमात्मनोः ॥ २७७ ॥

( ३ ) जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता शुद्धचैतन्यात्मिका भवति ॥ २७८ ॥

अथ समाधिभेदानाह ।

(४) अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥ आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् २७९

---

( १ ) योगकुण्डलिन्युप० श्लो० २६ । प० ७५१ । पृ० १ । पं० ३ ॥
( २ ) योगतत्त्वोप० श्लो० १०५ । प० ३९३ । पृ० १ । पं० ९ ॥
( ३ ) शाण्डिल्योपनि० अ० १ । खं० १२ । प० ५५५ । पृ० २ । पं० २ ॥
( ४ ) सरस्वतीरहस्योप० श्लो० २२–३१ । प० ८५२ । पृ० २ । पं० ६ ॥

अपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ॥ समाधिं सर्वदा कुर्य्याद्धृदये वाऽथ वा बहिः ॥ २८० ॥ सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ॥ दृश्यशब्दानुभेदेन सविकल्पः पुनर्द्विधा ॥ २८१ ॥ कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ॥ ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ ॥ २८२ ॥ असङ्गसच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ॥ अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २८३ ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दाद्यपेक्षितुः॥ निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥ २८४ ॥ हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ॥ समाधिराद्यसन्मात्रान्नामरूपपृथक्कृतिः ॥ ॥२८५ ॥ स्तब्धीभावो रसाऽऽस्वादात्तृतीयः पूर्ववन्मतः ॥ एतैस्समाधिभिष्षड्भिर्नयेत्कालं निरन्तरम् ॥ २८६ ॥

( १ ) सलिले सैन्धवं यद्वत्साम्यं भवति योगतः ॥ तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ २८७ ॥ यदा सङ्क्षीयते प्राणो मानसं च प्रलीयते ॥ तदा समरसत्वं यत्समाधिरभिधीयते ॥ २८८ ॥ यत्समत्वं तयोरत्र जीवाऽऽत्मपरमाऽऽत्मनोः ॥ समस्तनष्टसङ्कल्पस्समाधिरभिधीयते ॥ २८९ ॥ प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं निरामयम् ॥ सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ॥ २९० ॥ स्वयमुच्चलिते देहे देही नित्यसमाधिना ॥ निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ २९१ ॥ यत्रयत्र मनो याति तत्रतत्र परं पदम् ॥ तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ २९२ ॥

( २ ) निर्विकल्पे स्थितो विद्वान्भूयो नाऽप्यनुशोचति ॥ २९३ ॥

---

( १ ) सौभाग्यलक्ष्म्युपनि० श्लो० १४-१९ । प० ८४७ । पृ० १ । पं० १ ॥

( २ ) सौभाग्यलक्ष्म्युपनिषद् । श्लो० १३ । प० ८४७ । पृ० १ । पं० १ ॥

(१) भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ २९४ ॥

अथ ज्ञानयोगलक्षणम् ।

(२) यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम् ॥ ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः ॥ २९५ ॥

अथ ज्ञानयोगाङ्गलक्षणानि ।

(३) सर्वं ब्रह्मेति वै ज्ञानादिन्द्रियग्रामसंयमः ॥ यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ २९६ ॥ सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ॥ नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ २९७ ॥ त्यागो हि महता पूज्यः सद्यो मोक्षप्रदायकः ॥ यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ॥२९८॥

---

(१) सरस्वतीरहस्योपनिषद्० श्लो० ३२ । प० ८५३ । पृ० १ । पं० ८ ॥

(२) त्रिशिखीब्राह्म० श्लो० २६ । प० ४३३ । पृ० १ । पं० २ ॥

(३) तेजोबिन्दूप० अ० १ । श्लो० १७–४९ । प० ३३८ । पृ० २ । पं० ३ ॥

यन्मौनं योगिभिर्गम्यं तद्भजेत्सर्वदा बुधः ॥
वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ॥
॥ २९९ ॥ प्रपञ्चो यदि वक्तव्यः सोऽपि शब्द-
विवर्जितः ॥ इति वा तद्भवेन्मौनं सर्वं सहज-
संज्ञितम् ॥ गिरां मौनं तु बालानामयुक्तं
ब्रह्मवादिनाम् ॥ ३०० ॥ आदावन्ते च
मध्ये च जनो यस्मिन्न विद्यते ॥ येनेदं सततं
व्याप्तं स देशो विजनः स्मृतः ॥ ३०१ ॥
कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः ॥
कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ॥
॥ ३०२ ॥ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्म-
चिन्तनम् ॥ आसनं तद्विजानीयादन्य-
त्सुखविनाशनम् ॥ ३०३ ॥ सिद्धये सर्व-
भूतादिविश्वाधिष्ठानमद्वयम् ॥ यस्मिन्सिद्धिं
गताः सिद्धास्तत्सिद्धासनमुच्यते ॥ ३०४ ॥
यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम् ॥
मूलबन्धः सदा सेव्यो योग्योऽसौ ब्रह्मवा-
दिनाम् ॥ ३०५ ॥ अङ्गानां समता विद्या-
त्समब्रह्मणि लीयते ॥ नो चेन्नैव समानत्व-

मृजुत्वं शुष्कवृक्षवत् ॥ ३०६ ॥ दृष्टिं ज्ञान-
मयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥ सा
दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥
॥ ३०७ ॥ द्रष्टृदर्शनदृश्यानां विरामो यत्र
वा भवेत् ॥ दृष्टिस्तत्रैव कर्त्तव्या न नासा-
ग्रावलोकिनी ॥ ३०८ ॥ चिन्तादिसर्वभा-
वेषु ब्रह्मत्वेनैव भावनात् ॥ निरोधः सर्व-
वृत्तीनां प्राणायामः स उच्यते ॥ ३०९ ॥
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः ॥
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते ॥
॥ ३१० ॥ ततस्तद्वृत्तिनैश्चल्यं कुम्भकः
प्राणसंयमः ॥ अयं चापि प्रबुद्धानामज्ञानां
घ्राणपीडनम् ॥ ३११ ॥ विषयेष्वात्मतां
दृष्ट्वा मनसश्चित्तरञ्जकम् ॥ प्रत्याहारः स
विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः ॥ ३१२ ॥
यत्रयत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ॥
मनसा धारणं चैव धारणा सा परा मता ॥
॥ ३१३ ॥ ब्रह्मैवास्मीति सद्वृत्त्या निरालं-
म्बतया स्थितिः ॥ ध्यानशब्देन विख्यातः

परमानन्ददायकः ॥ ३१४ ॥ निर्विकार-
तया वृत्त्या ब्रह्माकारतया पुनः ॥ वृत्तिवि-
स्मरणं सम्यक् समाधिरभिधीयते ॥ ३१५ ॥
इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ॥
लक्ष्यो यावत्क्षणात्पुंसः प्रत्यक्त्वं संभवे-
त्स्वयम् ॥ ३१६ ॥ ततः साधननिर्मुक्तः
सिद्धो भवति योगिराट् ॥ तत्स्वं रूपं भवे-
त्तस्य विषयो मनसा गिराम् ॥ ३१७ ॥
समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै
बलात् ॥ अनुसंधानराहित्यमालस्यं भोग-
लालसम् ॥ ३१८ ॥ लयस्तमश्च विक्षेप-
स्तेजः स्वेदश्च शून्यता ॥ एवं हि विघ्नबा-
हुल्यं त्याज्यं ब्रह्मविशारदैः ॥ ३१९ ॥ भाव-
वृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ॥
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत्॥
॥ ३२० ॥ ये हि वृत्तिं विहायैनां ब्रह्माख्यां
पावनीं पराम् ॥ वृथैव ते तु जीवन्ति पशु-
भिश्च समा नराः ॥ ३२१ ॥ ये तु वृत्तिं
विजानन्ति ज्ञात्वा वै वर्धयन्ति ये ॥ ते वै

सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥३२२॥
येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ॥ ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ ३२३ ॥ निमिषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ॥ यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ ३२४ ॥ कारणं यस्य वै कार्यं कारणं तस्य जायते ॥ कारणं तत्त्वतो नश्येत्कार्याभावे विचारतः ॥ ३२५ अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ॥ उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ ३२६ ॥

( १ ) पुङ्खाऽनुपुङ्खविषये क्षणतत्परोऽपि ब्रह्माऽवलोकनधियं न जहाति योगी ॥ सङ्गीततालयवाद्यवशङ्गताऽपि मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥ ३२७ ॥

( १ ) वाराहोपनिषत् अ० २ । श्लो० ८१ । प० ८१६ । पृ० १ । पं० ९ ॥

(१) योगज्ञानपरो नित्यं स योगी न प्रणश्यति ॥
(२) योगज्ञाने न विद्येते तस्य भावो न सिद्ध्यति ॥ ३२८ ॥

इति श्रीमन्मैथिलकुलालङ्कारबाबूनन्दनशर्म्म-
सङ्गृहीतश्रुतिसिद्धान्तसारसङ्ग्रहे
योगप्रकरणं तृतीयम् ॥ ३ ॥

(१-२) त्रिशिखीब्राह्मणोप० श्लो० २० । २१ । प० ४३२ । पृ० २ । पं० ४ । ६ ॥



ॐब्रह्मणे नमः ।

श्रुतिसिद्धान्तसारसंग्रहः ।

# अथ सृष्टिप्रकरणं चतुर्थम् ॥ ४ ॥



(१) सत्यꣳशाण्डिल्यपरं ब्रह्म निष्क्रिय-मक्षरमिति ॥ १ ॥

अथ सृष्टौ दृष्टान्तानाह ।

(२) यथोर्णनाभिः[१] सृजते[२] गृह्णते[३] च यथा पृथिव्यामोषधयः[४] सम्भवन्ति[५] ॥

---

१–अथ सहकारिणमन्तरेण ब्रह्मणो जगदुपादानत्वे प्रथमदृष्टान्तमाह यथोर्णेति–लूताकीटः ॥ २–परानपेक्ष एव स्वशरीरात्तन्तून् बहिः प्रसारयति ॥ ३–गृह्णाति प्रसारित-तन्तून्स्वस्मिन्नुपसंहरति ॥ ४–अथ कार्यस्योपादानाभिन्नत्वेनो-त्पत्तौदृष्टान्तमाह-पृथिव्या इति-भूमितः ॥ ५-व्रीहियवादिरूपाः स्वाभिन्नाः ॥ ६–समुत्पद्यन्ते ॥

---

(१) शाण्डिल्योपनिषद् अ० ३ । श्रु० ४ । प० ५५६ । पृ० १ । पं० ८ ॥

(२) मुण्डकोपनिषद् मुण्डक १ । खण्ड १ । प० २० । पृ० २ । पं० ३ ॥

यथा[1] सतः[2] पुरुषात्केश[3]लोमानि तथाऽक्षरा[4]त्स-म्भवतीह विश्वम् ॥ २ ॥

( १ ) य[5]था सुदीप्तात्पावकाद्वि[6]स्फुलिङ्गाः
सहस्रशः सम्भवन्ति स[7]रूपाः ।
तथाऽक्षराद्विविधाः सोम्य[8]भावाः
प्रजायन्ते तत्र चैवा[9]ऽपियन्ति ॥ ३ ॥

---

१-ननु भवत्वचेतनायाः पृथिव्या अचेतनानामोषधीनामुत्पत्तिः चेतनाद्ब्रह्मणः कथञ्जडकार्यस्योत्पत्तिरिति शङ्कानिरासाय दृष्टान्तान्तरमाह-सत इति-जीवतः ॥ २-चेतनत्वेन प्रसिद्धान्नरात् ॥ ३-केशलोमानि सम्भवन्तीत्यनुषङ्गः ॥ ४-न क्षरति न नश्यति इत्यक्षरः अविनाशी-ब्रह्मेत्यर्थः ॥ ५-अथ ब्रह्मणः सरूपत्वेनाऽपरोक्षत्वेन जीवरूपत्वेन यज्जननं तत्र दृष्टान्तमाह-यथा सुदीप्तादिति ॥ ६-अग्निकणाः॥ ७-ज्योतिष्ट्वेन सदृशरूपाः ॥ ८-अग्निकणा इव कारणरूपा एव जीवादयो जायन्ते ॥ ९-लीयन्ते, तत्रैव नीरतरङ्गयोरिव भेदानुभवो भ्रम इति परमानिष्कर्षः ॥

---

( १ ) मुण्डकोपनिषद् मु० २ । खं० १ । पत्र० २२ । पृ० १ । पं० १ ॥

अथ सृष्टिक्रममाह ।

( १ ) सदेव[1] सोम्येदम[2]ग्र[3] आसी-
देकमेवाऽद्वितीयम्[6] ॥ ४ ॥

( २ ) आत्मा वा इदमेकं[10] एवाऽग्र-

१-अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यस्तत्सत् ॥ २-एवशब्दोऽवधारणार्थः । किं तदवधार्यत इत्याह ॥ ३-इदं जगन्नामरूपक्रियावद्विकृतम् ॥ ४-अग्रे जगतः प्रागुत्पत्तेः ॥ ५-स्वकार्यपतितमन्यन्नास्ति सजातीयस्वगतभेदद्वयहीनमित्यर्थः ॥ ६-विजातीयभेदशून्यं सद्व्यतिरेकेण सतः सहकारिनिमित्तकारणरहितम् ॥ ७-“ यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते ॥ ” इति स्मृतावात्मशब्दार्थ उक्तः । एवं स्मृत्युक्त आत्मा द्विविधः—व्यवहारविशिष्टः, केवलश्चेति । व्यवहारोऽपि त्रिविधः—जागरणम्, स्वप्नः, सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म यद्यस्मादाप्नोति तस्मादात्मेति स्मृत्युक्तं प्रथमात्मशब्दनिर्वचनं द्रष्टव्यम् । स्वप्नावस्थायाम-*

( १ ) छान्दोग्योपनिषद् प्र० ६ । खं० २ । प० ८२ । पृ० २ । पं० ५ ॥

( २ ) ऐतरेयोपनिषद् अ० १ । खं० १ । प० ३८ । पृ० २ । पं० ४ ॥

आसीन्नान्यत्किञ्चन मिषत् ॥ ५ ॥

( १ ) सोऽकामयत बहु स्यांप्रजायेये-
ति ॥ स तपोऽतप्यत ॥ ६ ॥

( २ ) यस्य ज्ञानमयन्तपः ॥ ७ ॥

*–यज्जीवो जागृतिस्थपदार्थवासनाः यद्यस्मादादत्ते गृह्णाति तस्मादात्मेति द्वितीयमात्मशब्दार्थनिर्वचनम् । यद्यस्मादिह जाग्रदवस्थायां चक्षुरादीन्द्रियैर्बाह्यान् विषयानत्ति भुङ्क्ते तस्मादात्मेति तृतीयमात्मशब्दार्थनिर्वचनम् । यद्यस्मादस्यात्मनो भावः स्वरूपविशेषः सन्ततः परिच्छेदरहितस्तस्मादतति सातत्येन सर्वत्र सङ्गच्छते इत्यात्मेति चतुर्थकेवलात्मपरात्मशब्दार्थनिर्वचनम् ॥ ८ वा–वै शब्दोऽवधारणे ॥ ९–प्रत्यक्षादिप्रमाणैः प्रतीयमानं जगत् ॥ १०–उक्तार्थः ॥

१–सत्ताऽवैशिष्ट्यमेव प्रतीयते ॥ २–प्रकृतात्मनो विलक्षणं किञ्चिदपि वस्तु नेति विजातीयभेदं व्यावर्तयाति ॥ ३ मिषद्व्यापारवच्चैतन्यन्नासीत् । यद्वा–धातूनामनेकार्थत्वान्मिषन्नासीन्नाभवन्नित्यर्थः ॥ ४–सः परमात्मा ॥ ५–कामितवान् ॥ ६–बहु–प्रभूतम्, स्यां भवेयम् । कथमेकस्य बहुभवनमित्यत आह ॥ ७–प्रजायेयेति । प्रकर्षेण उत्पद्येयेत्यर्थः ॥ ८–९–सृज्यमानजगद्रचनादिविषयमालोचनमकरोत् ॥ १०–सृज्यमानसर्वपदार्थाभिज्ञत्वलक्षणम् ॥

( १ ) तैत्तिरीयोपनिषद् अ० ६ । प० ३३ । पृ० १ । पं० ८ ॥
( २ ) मुण्डकोपनिषद् मु० १ । खं० १ । प०२० । पृ०२ । पं०६ ॥

तपसा[1] चीयते ब्रह्म ततोऽन्नम[2]-
भिजायते ॥ ८ ॥

अथ प्रकृत्युत्पत्तौ दृष्टान्तमाह ।

( १ ) प्रावृट्काले प्रारम्भे यथा मण्डूका-
दीनां प्रादुर्भावस्तद्वत्सर्वात्मना नष्टाया अवि-
द्याया उन्मेषकाले पुनरुदयो भवति ॥ ९ ॥

अथ प्रकृतिलक्षणम् ।

( २ ) तस्मिन्मरुशुक्तिकास्थाणुस्फटि-
काऽऽदौ जलरौप्यपुरुषरेखाऽऽदिवल्लोहि-

१–उत्पत्तिविधिज्ञतया । स्रष्टव्यप्रपञ्चस्यालोचनात्मकेने-
त्यर्थः॥ २–एकोऽहं बहु स्यामितीच्छावद्भवति ॥ ३–ईश्वरो-
पाधिभूतमव्यान्तं व्याचिकीर्षितामवस्थामापद्यते ॥ ४–वर्षास-
मयोपक्रमे ॥ ५–सृष्टिसमये शङ्कराचार्योक्तश्लोकः ॥
"चिरमानन्दानुभवात्सुषुप्तिरिव काप्यवस्थाऽभूत् । परमात्मनस्तु
तस्यां स्वप्नवदेवोत्थिता माया ॥"

( १ ) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० ५ । प० ४८२ ।
पृ० १ । पं० ५ ॥
( २ ) पैङ्गलोपनिषद् अ० १ । श्रु० २ । प० ५५८ । पृ० १ ।
पं० ४ ॥

तशुक्लकृष्णगुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत् ॥ १० ॥

(१) ब्रह्मणः सकाशान्नानाविचित्रजगन्निर्माणसामर्थ्यबुद्धिरूपा ब्रह्मशक्तिरेव प्रकृतिः ११

अथ पुरुषस्वरूपमाह ।

(२) सत्यमाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥ प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च ते ॥ १२ ॥

(३) अव्यक्तात्तु परः पुरु[१]षो व्यापकोऽलिङ्ग एव च ॥ १३ ॥

(४) ज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञाता स्वयमाविर्भावतिरोभावरहितः स्वयंज्योतिः साक्षीत्युच्यते ॥ १४ ॥

---

१-पूर्णत्वात्पुरुषः । पूर्णः सकलजडप्रकाशक इत्यर्थः ॥

---

(१) निरालम्बोपनिषद् प० ३२८ । पृ० २ । पं० ९ ॥

(२) सरस्वतीरहस्योपनिषत् शु० १२। प० ८५२। पृ०१।पं०२॥

(३) कठोपनिषत् अ० २ । व० ३ । मं० ८ । प० १२। पृ० २ । पं० २ ॥

(४) सर्वसारोपनिषद् प० ३२६ । पृ० २ । पं० ३ ॥

अथ मायालक्षणम् ।

( १ ) सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥ १५ ॥

( २ ) अनादिरन्तवती प्रमाणाप्रमाणसाधारणा न सती नासती न सदसती स्वयमधिका विकाररहिता निरूप्यमाणा सतीतरलक्षणशून्या सा मायेत्युच्यते ॥ १६ ॥

अथेश्वरस्वरूपम् ।

( ३ ) शुद्धसत्त्वप्रधानायाम्मायायां बिम्बितो ह्यजः ॥ सा माया स्ववशोपाधिसर्वज्ञस्येश्वरस्य हि ॥ १७ ॥

वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ सात्त्विकत्वात्समष्टित्वात्सादित्वाज्जगतामपि ॥ १८ ॥ जगत्कर्त्तुमकर्त्तुं वा चान्यथा कर्त्तुमीशते ॥ यः स ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैः ॥ १९ ॥

( १ ) सरस्वतीरहस्योपनिषद् मं० १४ । प० ८५२ । पृ० १ । पं० ४ ॥

( २ ) सर्वसारोपनिषद् । मं० ( ? ) प० ३२७ । पृ० १ । पं० ७ ॥

( ३ ) सरस्वतीरहस्योपनिषद् मं० १४ । प० ८५२ । पृ० १ । पं० ४ ॥

( १ ) ब्रह्मादीनाम्बुद्धीन्द्रियनियन्तृत्वादीश्वरः ॥ २० ॥

अथ विक्षेपशक्तिस्वरूपमाह ।

( २ ) ईशाधिष्ठिताऽऽवरणशक्तितो रजोद्रिक्ता महदाख्या विक्षेपशक्तिरासीत् ॥ २१ ॥

अथ हिरण्यगर्भस्वरूपमाह ।

तत्प्रतिबिम्बितं यत्तद्धिरण्यगर्भं चैतन्यमासीत् ॥ २२ ॥

अथ स्थूलशक्तिस्वरूपम् ।

विक्षेपशक्तितस्तमोद्रिक्तादहङ्काराभिधा स्थूलशक्तिरासीत् ॥ २३ ॥

अथ विराट्स्वरूपम् ।

तत्प्रतिबिम्बितं यत्तद्विराट् चैतन्यमासीत् २४॥

अथ पञ्चमहाभूतोत्पत्तिक्रमः ।

( ३ ) अहङ्कारात्पञ्च तन्मात्राणि पञ्च तन्मात्रेभ्यः पञ्च महाभूतानि ॥ २५ ॥

---

( १ ) निरालम्बोपनिषत् प० ३२८ पृ० २ । पं० ७ ॥

( २ ) पैङ्गलोपनिषत् अ० १ । श्रु० ११ । १२ । १४ । १५ । प० ५५८ । पृ० २ । पं० १ ॥

( ३ ) त्रिशिखीब्राह्मणोपनिषत् अ० १ । प०४३० । पृ०१।पं०९॥

(१) तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ॥ आकाशाद्वायुर्वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी ॥ २६ ॥

अथ पञ्चमहाभूतगुणानाह ।

(२) शब्दस्पर्शरूपरसगन्धाः पृथिवीगुणाः शब्दस्पर्शरूपरसा आपां गुणाः ॥ शब्दस्पर्शरूपाण्यग्नेर्गुणाः ॥ शब्दस्पर्शाविति वायुगुणौ । शब्दमेकमाकाशस्य ॥ २७ ॥

अथ ब्रह्मैकदेशेऽविद्याण्डमाह ।

(३) पञ्चमहाभूतेभ्यो ब्रह्मैकपादव्यातमेकमविद्याण्डं जायते ॥ २८ ॥

अथाविद्याण्डाधिष्ठितेश्वरस्वरूपमाह ।

तत्र तत्त्वतो गुणातीतशुद्धसत्त्वमयो लीलागृहीतनिरतिशयानन्दलक्षणो मायोपाधिको नारायण आसीत् ॥ २९ ॥

---

१—व्यवहितब्राह्मणवाक्येनोक्तात् । २ सत्यादिमन्त्रेणोक्तात् ॥ ३—आत्मोपाधिरूपाहङ्कारात् ॥

---

(१) तैत्तिरीयोपनिषत् ब्रह्मानन्दवल्लीअनुवाक १ । प० ३१ । पृ० २ । पं० २ ॥

(२) शारीरकोपनिषद् अ० १ । प० ६०५ । पृ० १ । पं० २ ॥

(३) त्रिपाद्विभूतिमहानारायणोपनिषत् अ० २ । प० ४७६ । पृ० १ । पं० ५ ॥

अथ पञ्चीकरणं तत्कार्यञ्चाह ।

( १ ) तानि पञ्च तन्मात्राणि त्रिगुणानि भवन्ति ॥ स्रष्टुकामो जगद्योनिस्तमोगुणमधिष्ठाय सूक्ष्मतन्मात्राणि भूतानि स्थूलीकर्त्तुं सोऽकामयत ॥ सृष्टेः परिमितानि भूतान्येकमेकं द्विधा विधाय पुनश्चतुर्धा कृत्वा स्वस्वेतरद्वितीयांशैः पञ्चधा संयोज्य पञ्चीकृतभूतैरनन्तकोटिब्रह्माण्डानि तत्तदण्डोचितचतुर्दशभुवनानि तत्तद्भुवनोचितगोलकस्थूलशरीराण्यसृजत् ॥ ३० ॥

अथ स्थूलशरीरस्वरूपम् ।

( २ ) पृथिव्यादिमहाभूतानां समवायः शरीरम् ॥ यत्कठिनं सा पृथिवी अस्थिचर्मनाडीरोममांसाश्चेति पृथिव्यंशाः ॥ यद्द्रवं तदापः मूत्रश्लेष्मरक्तशुक्रस्वेदा अबंशाः ॥ यदुष्णं तत्तेजः क्षुत्तृष्णाऽऽलस्यमोहमैथुना-

( १ ) पैङ्गलोपनिषत् अ० १ । श्रु० २२ । २३ । २४ । प० ५५८ । पृ० २ । पं० ७ ॥

( २ ) शारीरकोपनिषत् प० ६०४ । पृ० २ । पं० १ ॥

न्यग्नेः ॥ यत्सञ्चरति स वायुः प्रचारणविलेखनस्थूलाऽऽद्युन्मेषनिमेषाऽऽदि वायोः ॥ यत्सुषिरं तदाकाशम् । कामक्रोधलोभमोहभयान्याकाशस्य ॥ ३१ ॥

( १ ) एतत्संघातं कर्मणि सञ्चितं त्वगादियुक्तं बाल्याऽऽद्यवस्थाऽभिमानास्पदं बहुदोषाऽऽश्रयं स्थूलशरीरं[1] भवति ॥ ३२ ॥

अथान्नमयकोशः ।

अन्नरसेनैव भूत्वाऽन्नरसेनाभिवृद्धिं प्राऽऽप्याऽन्नरसमयपृथिव्यां यद्विलीयते सोऽन्नमय[2]कोशः । तदेव स्थूलशरीरम् ॥ ३३ ॥

---

१–शीर्यते वयोभिर्बाल्यकौमारयौवनवार्द्धक्यादिभिरिति शरीरम् । दह–भस्मीकरणे इति व्युत्पत्त्या च देहः भस्मीभावं प्राप्नोति । केन–अध्यात्मिकाधिभौतिकाधिदैविकतापत्रयाग्निना ॥ २–अत्र मयट् प्रत्ययो विकारार्थे । अन्नविकारत्वादन्नमयः । खड्गकोशवदाच्छादकत्वात्कोश इत्युच्यते । अन्नमयश्चासौ कोशश्च अन्नमयकोशः ॥

---

( १ ) पैङ्गलोपनिषत् अ० २ । श्रु० २९ । २७ । २८ । प० ५६० । पृ० १ । पं० १ ॥

अथ स्थूलशरीरे षड्भावविकृतयः ।

( १ ) षड्भावविकृतिश्चाऽस्ति जायते वर्धतेऽपि च ॥ परिणामं क्षयं नाशं षड्भावविकृतिं विदुः ॥ ३४ ॥

अथापञ्चीकृतमहाभूतकार्य्यमाह ।

( २ ) अथाऽपञ्चीकृतमहाभूतरजोंशभागत्रयसमष्टितः ॥

( ३ ) पञ्चवृत्त्यात्मकं प्राऽणमसृजत् ॥ ३५ ॥

( ४ ) प्राणाऽपानव्यानोदानसमानाः प्राणवृत्तयः ॥ नागकूर्मकृकरदेवदत्तधनञ्जया उपप्राणाः ॥ हृदासननाभिकण्ठसर्वाङ्गानि स्थानानि ॥ ३६ ॥ आकाशाऽऽदिरजोगुणतुरीयभागेन कर्मेन्द्रियाण्यसृजत् ॥ ३७ ॥

( ५ ) वाक्पाणिपादपायूपस्थाऽऽख्यानि कर्मेन्द्रियाणि ॥ वचनाऽऽदानगमनविसर्गाऽनन्दाश्चैते विषयाः ॥ ३८ ॥

---

( १ ) वाराहोपनिषत् अ० १ । मं०८ । प०८१० । पृ०१।पं०२॥
( २ । ३ । ४ ) पैङ्गलोपनिषत् अ० ३ । १ । २ । प० ५६० । ५५९ । पृ० १ । पं० २ । ४ । ३ ॥
( ५ ) शारीरकोपनिषत् प० ६०४ । पृ० २ । पं० २ ॥

(१) एवं भूतसत्त्वांशभागत्रयसमष्टिताऽन्तःकरणमसृजत् ॥ ३९ ॥

(२) मनोबुद्धिरहङ्कारश्चित्तमित्यन्तःकरण चतुष्टयम् ॥ सङ्कल्पविकल्पाऽध्यवसायाऽभिमानाऽवधारणस्वरूपाश्चैते विषयाः ॥ मनःस्थानं गलाऽन्तं बुद्धेर्वदनमहङ्कारस्य हृदयं चित्तस्य नाभिरिति ॥ ४० ॥

(३) भूतसत्त्वतुरीयभागेन ज्ञानेन्द्रियाण्यसृजत् ॥ ४१ ॥

(४) श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ॥ ४२ ॥

(५) शब्दस्पर्शरूपरसगन्धाश्चैते विषयाः ॥ ४३ ॥

(६) सत्त्वसमष्टित इन्द्रियपालकानसृजत् ॥ ४४ ॥

---

(१) पैङ्गलोपनिषत् अ० १। श्रु० १७। प० ५६०। पृ० १। पं० ६ ॥

(२) शारीरकोपनिषत् प० ६०४। पृ० २। पं० ७ ॥

(३।६) पैङ्गलोपनिषत् अ० २। १ प० ५६०। ५५९। पृ० १। पं० ९। ५ ॥

(४) त्रिशिखीब्राह्मणोपनिषत् प० ४२०। पृ० २। पं० ४ ॥

(५) शारीरकोपनिषत् प० ६०४। पृ० २। पं० ४ ॥

( १ ) दिग्वाताऽर्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः[1,2,3] ॥ तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः ॥ ४५ ॥

अथ पञ्चीकृतभूतकार्य्येष्वपञ्चीकृतभूतकार्य्याणां क्षेपणमाह ।

( २ ) तानि सृष्टान्यण्डे प्राक्षिपत् तदाज्ञया समष्टयण्डं व्याप्य तान्यतिष्ठत् ॥ ४६ ॥

अथ प्राणमयकोशः ।

( ३ ) कर्मेन्द्रियैस्सह प्राणादिपञ्चकम्प्राणमयकोशः ॥

अथ मनोमयकोशः ।

ज्ञानेन्द्रियैस्सह मनो मनोमयकोशः ॥

---

१–वरुणः ॥ २ ब्रह्मा ॥ ३ विष्णुः । 'क्षेत्रज्ञञ्चापि मां विद्धि, इति भगवदुक्तेः ॥

---

( १ ) वाराहोपनिषत् अ० १ । श्लो० १४ । प० ८१० । पृ० १ । पं० ९ ॥

( २ ) पैङ्गलोपनिषद् अ० १ । प० ५५९ । पृ० १ । पं० ६ ॥

( ३ ) पैङ्गलोपनिषद् अ० २ । प० ५६० । पृ० २ । पं० ४ ॥

अथ विज्ञानमयकोशः ।

ज्ञानेन्द्रियैः सह बुद्धिर्विज्ञानमयकोशः ॥

अथ सूक्ष्मशरीरलक्षणम् ।

एतत्कोशत्रयं लिङ्गशरीरम् ॥ ४७ ॥

(१) बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ॥
शरीरं सप्तदशभिः सूक्ष्मन्तल्लिङ्गमुच्यते ॥४८॥

अथ लिङ्गशरीरे षडूर्मयः ।

(२) अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः ॥ ४९ ॥

अथानन्दमयकोशः ।

(३) कोशचतुष्टयसंसक्तं स्वकारणाऽज्ञाने वटकर्णिकायामिव वटवृक्षो यदा वर्त्तते तदाऽऽनन्दमयकोशः ॥ ५० ॥

---

१–लीनमर्थं श्रवणमननादिना गमयति प्रापयतीति व्युत्पत्त्या लिङ्गमित्युच्यते ॥ २–अहं ब्रह्मास्मीति ब्रह्मात्मैक्यज्ञानेन शीर्यत इति शरीरम् ॥

अथ शरीरप्रसङ्गेन देहशब्दार्थोऽप्युच्यते–'दह भस्मीकरणे इति व्युत्पत्त्या लिङ्गदेहस्य पृथिवीपुरःसरं क्षय इत्युच्यते ॥

---

(१) शारीरकोपनिषद् प० ६०१ । पृ० २ । पं० ५ ॥
(२) मुद्गलोपनिषद् प० ५४१ । पृ० २ । पं० ६ ॥
(३) सर्वसारोपनिषद् प० ३२६ । पृ० १ । पं० ५ ॥

( १ ) स्वरूपाऽज्ञानमानन्दमयकोशस्तत्कारणशरीरम्[1] ॥ ५१ ॥

अथ पञ्चकोशानामुत्तरोत्तरमन्तरत्वमाह ।

( २ ) तस्माद्वा[2] एतस्मादन्नरसमयात्[3] । अन्योऽन्तर आत्मा प्राणमयः ॥ ५२ ॥

( ३ ) तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः ॥ ५३ ॥

( ४ ) तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः ॥ ५४ ॥

( ५ ) तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः ॥ ५५ ॥

---

१–ब्रह्मात्मैकत्वज्ञानेन शीर्यत इति शरीरम् । 'दह भस्मीकरणे' इति व्युत्पत्त्या कारणदेहस्य पृथिवीपुरःसरं क्षय इत्युच्यते ॥ २–ब्राह्मणवाक्योक्तात् ॥ ३–मन्त्रोक्तात् अन्नरसविकारात्स्थूलशरीरात् ॥

---

( १ ) पैङ्गलोपनिषत् अ० २ । प० ५६० । पृ० २ । पं० ६ ॥

( २।३।४ ) तैत्तिरीयोपनिषत् ब्रह्मानन्दवल्ली । अनु० २।३ । ४ । पत्र ३२ । ३३ । पृ० १ । २ । १ । पं० १ । ९ । ४ ॥

( ५ ) तैत्तिरीयोपनिषद ब्रह्मानन्दवल्ली अनु० ५ । प० ३३ । पृ० १ । पं० १ ॥

अथेश्वरस्यान्तर्यामिरूपेण प्रवेशमाह ।

(१) अण्डस्थानि तानि तेन विना स्पन्दितुं चेष्टितुं वा न शेकुः तानि चेतनीकर्त्तुं सोऽकामयत ब्रह्माण्डब्रह्मरन्ध्राणि समस्तव्यष्टिमस्तकान्विदार्य तदेवाऽनुप्राविशत् ॥ ५६ ॥

(२) तत्[1]सृष्ट्वा तदेवानु[2]प्राविशत् ॥ ५७ ॥

अथान्तर्यामिलक्षणम् ।

(३) यः सर्वेषु भूतेषु[3] तिष्ठन्सर्वेभ्यो भूतेभ्यो[4]ऽन्तरो यꣳसर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरोयम[5]यत्येष त आत्माऽन्तर्याम्यमृतः ॥ ५८ ॥

१-जगत् ॥ २ अनुप्रवेशं कृतवान् । अत्र गुहात्वेन विज्ञानमयकोशत्वेनोक्ता दीपादिवज्जडत्वेऽपि स्वभाववैचित्र्यात् संयुक्तार्थोपलम्भहेतुभूता बुद्धिरेवेह तच्छब्देन विवक्षिता तस्यां बुद्धिरूपगुहायामेव स्रष्टुर्ब्रह्मणोपलम्भादनुप्रवेश उपचर्यते ॥ ३-ब्रह्मादिस्तम्बपर्यन्तेषु ॥ ४-अभ्यन्तरः ॥ ५-नियमयति स्वव्यापारे । एतावता कार्यकरणस्येश्वरसाक्षिमात्रसान्निध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्याताम् ॥

(१) पैङ्गलोपनिषद् अ० १ । प० ५५१ । पृ० १ । पं० ८ ॥

(२) तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली अनुवाक ६ । प० ३३ । पृ० १ । पं० ९ ॥

(३) बृहदारण्यकोपनिषद् अ० ४ । ब्राह्मण ७ । श्रु० १५ । प० १३५ । पृ० १ । पं० ८ ॥

( १ ) कूटस्थोपहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणे सूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदाकाशत आत्मा तदान्तर्यामीत्युच्यते ॥ ५९ ॥

( २ ) तदा जडान्यपि तानि चेतनवत्स्वस्वकर्माणि चक्रिरे ॥ ६० ॥

अथेश्वरस्य जीवरूपेण प्रवेशमाह ।

सर्वज्ञेशो मायालेश[१]समन्वितो व्यष्टिदेहम्प्रविश्य तया मोहितो जीवत्वमगमत् ॥ ६१ ॥

अत्रार्थेऽन्या श्रुतिः ।

( ३ ) से[२]यं देवतैक्षत हन्ता[३]हमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ ६२ ॥

१-मलिनसत्त्वप्रधानाऽविद्येत्युच्यते ॥

२-सेयं प्रकृता सदाख्या भूतयोनिर्देवता ईक्षितवती ईक्षां कुर्वती ॥ ३-हन्तेदानीमहमिमा यथोक्तास्तेजआद्याः तिस्रो देवता अनेन जीवेनेति स्वबुद्धिस्थं पूर्वसृष्टचनु-

( १ ) सर्वसारोपनिषद् प० ३२६ । पृ० २ । पं० ६ ॥

( २ ) पैङ्गलोपनिषत् अ० १ । प० ५५९ । पृ० २ । पं० १ ॥

( ३ ) छान्दोग्योपनिषद् प्रपा० ६ । खं० ३ । प० ८३ । पृ० १ । पं० ३ ॥

(१) अहङ्काराभिमानेन जीवः स्याद्धि सदाशिवः ॥ स चाविवेकप्रकृतिसंगत्या तत्र मुह्यते ॥ ६३ ॥

अथ चिज्जडग्रन्थिलक्षणम् ।

(२) शरीरत्रयतादात्म्यात्कर्त्तृत्वभोक्तृतामगमत् ॥ ६४ ॥

(३) मन आदिश्च प्राणादिश्चेच्छादिश्च सत्त्वादिश्च पुण्यादिश्चैते पञ्चवर्गाः इत्येषाम्पञ्चवर्गाणान्धर्मीभूतात्मा ज्ञानादृते न वि-

-भूतप्राणधारणमात्मानमेव स्मरन्त्याहानेन जीवात्मनेति । प्राणधारणकर्त्रात्मनेति वचनात्स्वात्मनोऽव्यतिरिक्तेन चैतन्यस्वरूपतयाऽविशिष्टेनेत्येतद्दर्शयति ॥ ४–अनुप्रविश्य तेजोवन्नभूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती ॥ ५–नाम च रूपञ्च नामरूपे व्याकरवाणि विस्पष्टमाकरवाण्यसौ नामाऽयमिदंरूप इति व्याकुर्यामित्यर्थः । जीवो हि देवताया आभासमात्रम् । आभिमुख्येनाहमित्यापरोक्ष्येण भासत इत्याभासः स्वतोऽपरोक्षश्चित्प्रतिबिम्बस्तन्मात्रं जीवो नामेत्यर्थः ॥

(१) त्रिशिखीब्रा० अ० १ । प० ४३२ । पृ० १ । पं० ८ ॥
(२) पैंगलोपनिषद् अ० १ । श्रु० ३८ । प० ५५९ । पृ०२ । पं०२ ॥
(३) सर्वसारोपनिषद् प० ३२६ । पृ० १ । पं० ३ ॥

नश्यत्त्यात्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृद्ग्रन्थिरित्युच्यते तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते ॥ ६५ ॥

अथ जीवस्य क्षेत्रज्ञादिरूपप्राप्तिः ।

(१) चितो रूपमिदं ब्रह्मन्क्षेत्रज्ञ इति कथ्यते॥ वासनाः कलयन्सोऽपि यात्यहङ्कारतां पुनः ॥ ६६ ॥ अहंकारो विनिर्णेता कलंकी बुद्धिरुच्यते ॥ बुद्धिः संकल्पिताऽऽकारा प्रयाति मनसाऽऽस्पदम् ॥ ६७ ॥ मनो घनविकल्पन्तु गच्छतीन्द्रियतां शनैः ॥ पाणिपादमयं देहमिन्द्रियाणि विदुर्बुधाः॥६८॥ एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ॥ दुःखजालपरीताऽऽत्मा क्रमादायाति नीचताम् ॥ ६९ ॥ इति शक्तिमयं चेतो घनाऽहङ्कारतां गतम् ॥ कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥७० ॥ स्वयं कल्पि-

(१) महोपनिषद् अ० ५। श्लो० १२४। से १२९। प० ५९४। पृ० २। पं० १॥

तन्मात्राजालाऽभ्यन्तरवर्त्ति च ॥ परां विवशतामेति शृङ्खलाऽबद्धसिंहवत् ॥ ७१ ॥

अथ जाग्रदवस्थालक्षणम् ।

( १ ) मनआदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन् विषयान्स्थूलान् यदोपलभते तदाऽऽत्मनो जागरणम् ॥ ७२ ॥

अथ वा ।

( २ ) बुद्धेः पूर्णविकासोऽयं जागरः परिकीर्त्यते ॥ ७३ ॥

अथ स्वप्नावस्थालक्षणम् ।

( ३ ) तद्वासनासहितैश्चतुर्दशकरणैः शब्दाद्यभावेऽपि वासनामयाञ्छब्दादीन् यदोपलभते तदात्मनः स्वप्नम् ॥ ७४ ॥

अथ वा ।

( ४ ) सूक्ष्मनाडीषु सञ्चारो बुद्धेस्स्वप्नः प्रजायते ॥ ७५ ॥

( १ ) सर्वसारोपनिषद् अ० १ । प० ३२५ । पृ० २ । पं० ४ ॥
( २ ) वराहोपनिषद् अ० २ । श्लो० ६१ । प० ८१४ । पृ० २ । पं० ६ ॥
( ३ ) सर्वसारोपनिषद् अ० १ । प० ३२५ । पृ० २ । पं० ६ ॥
( ४ ) वराहोपनि० अ० २ । श्लो० ६१ । प० ८१४ । पृ० २ । पं० ७ ॥

अथवा ।

(१)अन्तःकरणचतुष्टयैरेव संयुक्तस्स्वप्नः ॥७६॥

अथ सुषुप्तिलक्षणम् ।

( २ ) अज्ञाने बुद्धिविलये निद्रा सा भण्यते बुधैः ॥ ७७ ॥

अथवा ।

( ३ ) चित्तककरणा सुषुप्तिः ॥ ७८ ॥

अथ मूर्च्छालक्षणम् ।

( ४ ) अकस्मान्मुद्गरदण्डाऽऽद्यैस्ताडितवद्भयाऽज्ञानाभ्यामिन्द्रियसंघातैः कम्पन्निव मृततुल्या मूर्च्छा भवति ॥ ७९ ॥

अथ मरणावस्थालक्षणम् ।

स्थूलदेहविसर्जनी मरणाऽवस्था भवति ॥८०॥

---

( १ ) शारीरकोपनि० अ० १ । प० ६०५ । पृ० २ । पं० ३ ॥

( २ ) वाराहोपनिषद् अ० २ । श्लो० ५९ । प० ८१४ । पृ० २ । पं० ५ ॥

( ३ ) शारीरकोपनिषद् अ० १ । प० ६०५ । पृ० २ । पं०४॥

( ४ ) पैङ्गलोपनिषद् अ० २ । श्रु० ५५ । ५६ । प० ५६१ । पृ० २ । पं० ८ ॥

### अथ जीवलक्षणम् ।

(१) अविद्याकार्याण्यन्तःकरणान्यतीत्य कालानन्तु तानि जायन्ते ब्रह्म चैतन्यं तेषु प्रतिबिम्बितं भवति प्रतिबिम्बा एव जीवा इति कथ्यन्ते ॥ अन्तःकरणोपाधिकास्सर्वे जीवा इत्येवं वदन्ति ॥ ८१ ॥

### अथ जीवस्य पञ्चावस्थासु विहारः ।

(२) अन्तःकरणप्रतिबिम्बितचैतन्यं यत्तदेव ।

(३) जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणधर्मयुक्तो घटीयन्त्रवदुद्विग्नो जातो मृत इव कुलालचक्रन्यायेन परिभ्रमति ॥ ८२ ॥

(४) महानदीपूर्म्मय इव निवर्तकमस्य यत्पुराकृतम् । समुद्रवेलेव दुर्निवार्यमस्य मृत्यो-

---

(१) त्रिपाद्विभूतिमहानारायणोप० अ० ४ । प० ४८१ । पृ० २ । पं० ४ ॥

(२-३) पैङ्गलोपनिषत् अ० २ । १ । प० ५६१ । ५५९ । पृ० १ । २ । पं० ६ । ३ ॥

(४) मैत्रायण्युपनि० प्रपा० ४ । श्रु० २ । प० २४२ । पृ० २ । पं० ७ ॥

रागमनं सदसत्फलमयैर्हि पाशैः पशुरिव बद्धं बन्धनस्थस्येवास्वातंत्र्यं यमविषयस्थस्येव बहुभयावस्थम्मदिरोन्मत्त इव मोहमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्यमाणं महोरगदष्ट इव विपद्दष्टं महान्धकार इव रागान्धमिन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरमम् ॥ शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः ॥ तेष्वासक्तस्तु भूतात्मा न स्मरेच्च परम्पदम् ॥ ८३ ॥

अथास्मिञ्छरीरे जीवः कर्त्तेश्वरः कारयितेति दृष्टान्तेनाह ।

(१) यः कर्त्ता सोऽयं वै भूतात्मा करणैः कारयिताऽन्तःपुरुषोऽथ यथाऽग्निनाऽयःपिण्डोऽन्यो वाऽभिभूतः कर्त्तृभिर्हन्यमानो नानात्वमुपैत्त्येवं वाव खल्वसौ भूताऽऽत्माऽन्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्व-

(१) मैत्रायण्युपनि० प्र० ३ । खं० ३ । प० २४१ । पृ० २ । पं० ८ ॥

मुपैत्यथ यत्त्रिगुणं चतुरशीतिलक्षयोनि-
परिणतम्भूतत्रिगुणमेतद्वै नानात्वस्य रूपं
तानि ह वा इमानि गुणानि पुरुषेणेरितानि
चक्रमिव चक्रिणेत्यथ यथाऽयःपिण्डे हन्य-
माने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरु-
षोऽभिभूयत्ययम्भूतात्मोपसंश्लिष्टत्वादिति ८४
( १ ) द्वा[1] सुपर्णा[2] सयुजा[3] सखाया[4] समानं[5]
वृक्षं[6]परिषस्वजाते[7]। तयोरन्यः[8] पिप्पलं[9] स्वा-
द्वत्त्य[10]नश्नन्[11]नन्यो[12]ऽभिचाकशीति[13] ॥ ८९ ॥
समाने वृक्षे पुरुषो[14] निमग्नो[15]ऽनीशया[16] शोचति

---

१–द्वौ ॥ २–सुपर्णौ पक्षिणौ ॥ ३–सयुजौ सर्वदा युक्तौ सहैव युक्तौ वा ॥ ४–सखायौ चिन्मयत्वेन समानरूपौ ॥ एवंभूतौ जीवेश्वरौ ॥ ५–अविशेषमेकरूपम् ॥ ६–उच्छेदसामान्याद्वृक्षतुल्यं शरीरम् ॥ ७–परिष्वक्तवन्तौ ॥ ८ ईशाद्भिन्नो जीवः ॥ ९–सुखदुःखात्मकं कर्मफलम् ॥ १०–स्वादु यथा स्यात्तथा अत्ति भुंक्ते ॥ ११–कर्मफलमभुञ्जानः सन् ॥ १२ –जीवाद्विलक्षणो नित्यशुद्धस्वभाव ईश्वरः ॥ १३–केवलं पश्यत्येव ॥ १४–कर्मफलभोक्ता जीवः ॥ १५–अयमेवाहमिति देहेन सह तादात्म्याभिमानमापन्नः ॥ १६–इष्टानिष्टप्राप्तिपरिहारं कर्त्तुमसमर्थोहमिति दीनभावोऽनीशा तया ॥

---

( १ ) मुण्डकोपनिषद् मुण्डक ३ । अ० १। प० २३। पृ० २। पं० ५॥

मुह्यमानः ॥ जुष्टं[1] यदा पश्यत्यन्यमीशमस्य[2] महिमानमिति[3] वीतशोकः ॥ ८६ ॥

अथ भावनार्थमीश्वरस्वरूपमाह ।

(१) अङ्गुष्ठमात्रः[4] पुरुषो[5] ज्योतिरिवाऽधूमकः[6] ॥ ईशानो[7] भूतभव्यस्य[8] मध्ये[9] आत्मनि[10] तिष्ठति[11] ॥ ८७ ॥

अथ जीवस्य रूपत्रयमाह ।

(२) अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाऽहंकारसमन्वितो यः ॥ बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोऽप्यपरोऽपि दृष्टः ॥ ८८ ॥

---

१-योगिभिः कर्मभिश्च सेवितम् ॥ २-ईश्वरोऽहं सर्वस्यात्मेत्यभेदेन जानाति ॥ ३-जगद्रूपविभूतिं ममैवेश्वरस्यायं महिमेत्येवं यदा विजानाति ॥ ४-अङ्गुष्ठपरिमाणं मनुष्यहृदयच्छिद्रं तदन्तर्वर्त्यन्तःकरणोपाधिकोऽङ्गुष्ठपरिमाणः ॥ ५-सर्वत्र पूर्णोऽयमात्मा ॥ ६-अधूमकं ज्योतिरिव धूमरहिताग्निवद्देदीप्यमानः प्रकाशस्वरूपः ॥ ७-८-भूतादिकालत्रयोपलक्षितसर्वविश्वस्य ॥ ९-नियामकः ॥ १०-मध्ये आत्मनि-शरीरत्रयमध्ये ॥ ११-सर्वसाक्षितया वर्त्तते ॥

---

(१) कठोपनिषद् अ० २ । प० १० । पृ० २ । पं० ७ ॥

(२) श्वेताश्वतरोपनिषद् अ० ५ । श्लो० ८ । ९ । प० १८५ । पृ० २ । पं० ३ ॥

बालाग्रशतभागस्य शतधा कल्पितस्य च ॥ भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ॥ ८९ ॥

अथेश्वरस्य जीवरूपेणावस्थात्रयेषु विहारः ।

(१) स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ॥ स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति॥९०॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके ॥ सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ॥ ९१ ॥ पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ॥ पुरत्रये क्रीडति यश्च जीवस्ततः सुजातं सकलं विचित्रम् ॥ ९२ ॥

---

१–अविद्याऽऽवरणविक्षेपरूपशक्तिः ॥ २ अहं मनुष्य इत्यभिमानेनाऽऽसमन्तात् स्वीकृत्य ॥ ३–स्वस्य तत्तद्देहाभिमानिनो मायाऽज्ञानं विपरीतज्ञानं च तया ॥ ४–कल्पिते वासनारूपे विश्वलोक इति ॥ ५ अज्ञानावृतः ॥

---

(१) कैवल्योपनिषद् श्रु० १२ । १३ । १४ । प० २९० । पृ० २ । पं० ३ ॥

(१) स वै[1] एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च ॥ सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैवेति ॥ ९३ ॥

अथ शरीरान्तरगमनप्रकारः ।

(२) कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि तत्तद्विषयान्प्राणान् संहृत्य कामकर्मान्वितेऽविद्याभूतवेष्टितो जीवो देहान्तरम्प्राप्य लोकान्तरङ्गच्छति ॥ ९४ ॥

(३) उपशान्ततेजाः[2] पुनर्भवमिं[3]द्रियैर्[4]मनसि[5] सम्पद्यमानैः[6] यच्चित्त[7]स्तेनै[8]षः[9] प्राणमा[10]याति[11]

१–स वेदान्तवेद्यः परमात्मा ॥ २–उपशान्तम् उच्छिन्नं तेजः शरीरगतं यस्य सः पुरुषः ॥ ३–एतच्छरीरं त्यक्त्वा पुनः शरीरान्तरं प्रतिपद्यत इति शेषः अथ तत्प्रकारमाह ॥ ४–वागादिकरणैः ॥ ५–अन्तःकरणे ॥ ६–प्रविशद्भिः इन्द्रियैः सह शरीरान्तरं प्रपद्यत इत्यर्थः ॥ ७–यदेव देवतिर्यगादिशरीरे सम्यगिति चित्तो यस्य सः ॥ ८–देवतिर्यगादिसङ्कल्पविशिष्टेन मनसा सेन्द्रियेण सह ॥ ९–अन्तःकरणाभिमानी जीवः ॥ १०–मुख्यप्राणम् ॥ ११ आगच्छति क्षीणेन्द्रियवृत्तिः सन् मुख्यप्राणवृत्त्यैवावतिष्ठत इत्यर्थः ॥

(१) नृसिंहोत्तरतापिन्युप० प० ३०१ । पृ० २ । पं०५ ॥
(२) पैङ्गल्योपनिषद् अ० २ । प० ५६२ । पृ० १ । पं० १ ॥
(३) प्रश्नोपनिषद् प्रश्नः ३ । प० १६ । पृ० २ ॥

प्राणस्तेज[1]सा युक्तः तेजो ह[3] वै उदानः सह[4]ात्मना यथासङ्कल्पितं लोकं नयति पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ९६ ॥

अथोत्क्रमणमार्गमाह ।

( १ ) प्रद्योते[5]नैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ॥ ( २ ) सविज्ञानो भवति स विज्ञानमेवा-न्ववक्रा[7]मति तं विद्या[8]कर्मणी समन्वा[9]रभेते पूर्व-

१–तेजोरूपो दानेन॥२-सम्बद्धः॥३–दाहकप्रकाशकरं सामान्यं तेजः ॥ ४–भोक्तृसहितः॥ ५–हृदयान्निर्गमनद्वारस्थप्रकाशेनो-दानरूपेणेत्यर्थः॥६-कर्मणाऽनूद्भाव्यमानेनान्तःकरणवृत्तिविशे-षाश्रितवासनात्मकविज्ञानेन सर्वो लोक एतस्मिन्काले सविज्ञानो भवति ॥ ७–गन्तव्यमनुगच्छति॥ ८–विद्यासर्वप्रकारा विहिता प्रतिषिद्धा चाविहिताऽप्रतिषिद्धा च कर्म विहितं प्रतिषिद्धं चाविहितमप्रतिषिद्धञ्च ॥ ९–सम्यगनुगच्छतः ॥

( १-२ ) बृहदारण्यकोपनि० अ० ६ । ब्रा० ४ । श्रु० २।३।४। प० १५४ । पृ० १ । पं० ८ । ९ ॥

प्रज्ञां[1] च ॥ ९६ ॥ तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवाऽयमात्मेदꣳशरीरं निहत्याविद्यां गमयित्वा[6]ऽन्यमा[7]क्रममाक्र[8]म्यात्मा[9]नमुपसꣳहरति ॥ ९७ ॥ त[10]द्यथा पेश[11]स्कारी पेशसो मा[13]त्रामुपा[14]दायान्यन्नवतरं कल्याणतरꣳरूपं कुरु[15]ते पैत्र्यं वा गान्धर्वं[16] वा प्राजापत्यं वा ब्राह्मं वाऽअन्येषां वा भूतानाम् ॥ ९८ ॥ ( १ ) तदेव सक्तः[17] सह कर्मणैति लिङ्गं[17] मनो यत्र निषक्त[18]मस्य ॥ प्राप्या[19]न्तं कर्मणस्तस्य

१-पूर्वानुभवविषया प्रज्ञाऽतीतकर्मफलानुभववासनेत्यर्थः ॥ २-तत्र देहान्तरसञ्चार इदं निदर्शनम् ॥ ३-आत्मानः पूर्वावयवम् ॥ ४।५-अचेतनं कृत्वा ॥ ६।७।८-शरीरान्तरं गृहीत्वा ॥ ९-पूर्वशरीरम् ॥ १०-तत्तत्र देहान्तरारम्भे ॥ ११-पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः ॥ १२-सुवर्णस्य ॥ १३-कमपि खण्डम् ॥ १४-गृहीत्वा ॥ १५-निर्मिनोति ॥ १६-तत्रोद्भूताभिलाषः सन् ॥ १७-मनःप्रधानत्वाल्लिङ्गस्य मनोलिङ्गमित्युच्यते यद्वा लिङ्ग्यतेऽवगम्यतेऽवगच्छति येन तल्लिङ्गं तन्मनः ॥ १८-निश्चयेनोद्भूताभिलाषम् ॥ १९-अवसानं यावत्कर्मणः परिसमाप्तिमित्यर्थः ॥

( १ ) बृहदारण्यक अ० ६ । ब्रा० ४ । श्रु० ६ । प० १५५ पृ० १ । पं० ३ ॥

यत्किञ्चेह करोत्ययम् ॥ तस्माल्लोकात्पुनरे-
[1]त्यास्मै लोकाय कर्मणा इति ॥ ९९ ॥

( १ ) प्राक्कर्मफलपाकेनावर्त्तान्तरकीटवद्भि-
भ्रान्तिन्नैव गच्छति ॥ १०० ॥

अथात्मपादचतुष्टयम् ।

( २ ) स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वा-
त्सूक्ष्मभुक् परम् ॥ ऐक्यत्वानन्दभोगाच्च
सोऽयमात्मा चतुर्विधः ॥ १०१ ॥

अथ प्रथमपादस्वरूपम् ।

( ३ ) जागरित[2]स्थानो ब[3]हिः प्रज्ञस्सप्ताङ्ग[4]
एकोनविंशतिमुख[5]: स्थूलभुक् वैश्वानर[6]: प्रथमः
पाद[7]: ॥ १०२ ॥

---

१-आगच्छति ॥ २-जागरितं स्थानमभिमानभूतं यस्य सः॥ ३-बहिःस्वात्मव्यतिरिक्तशब्दादिविषयेषु प्रज्ञा बुद्धिवृत्तिरूपा यस्य सः॥ ४-अग्निर्मूर्द्धेत्यादिश्रुत्युक्तद्युसूर्यवाय्वाकाशजलपृथिव्याहवनीयाख्यानि सप्ताङ्गानि ॥ ५-ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकमन्तःकरणचतुष्कमित्येकोनविंशतिसंख्याकानि मुखानि विषयोपलब्धिद्वाराणि यस्य सः॥ ६-विश्वे नरा अस्येति विश्वानरः विश्वानर एव वैश्वानरः॥ ७-अंसः॥

---

( १ ) पैंगलोपनि० अ० २ । प० ५६२ । पृ० १ । पं० ३ ॥
( २ ) नारदपरिव्राजकोप० अ० ८ । प० ४२६ । पृ०२।पं०३॥
( ३ ) माण्डूक्योपनि० श्रुतिः ३ । प० २५ । पृ० २ । पं० ९ ॥

( १ ) स्थूलभुक् चतुरात्माथ विश्वो वैश्वानरः पुमान् ॥ १०३ ॥

अथ विश्वस्य नामानि।

( २ ) विज्ञानात्मा चिदाभासो विश्वो व्यावहारिको जाग्रत्स्थूलदेहाभिमानीति १०४॥

अथ द्वितीयपादस्वरूपम् ।

( ३ ) विश्वजित्प्रथमः पादः स्वप्नस्थानगतः प्रभुः ॥ १०५ ॥

( ४ ) स्वप्नस्थानोऽन्तः प्रज्ञः[1] सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्त[2]भुक् तैजसो[3] द्वितीयः पादः ॥ १०६ ॥

---

१—अन्तर्हृदि मानसविषयेषु प्रज्ञा बुद्धिर्यस्य सः ॥ २—प्रविविक्तं सूक्ष्मं वासनामयं भुंक्त इति तथा ॥ ३—तेजसि वासनामयप्रज्ञायामाश्रयत्वेन वर्त्तमानः ॥

---

( १ ) नारदपरिव्राजको॰उ॰ अ॰ ८ । प॰ ४२६ । पृ॰२।पं॰६ ॥
( २ ) पैङ्गलोपनि॰ अ॰२ । प॰ ५६० । पृ॰ २ । पं॰ ९ ॥
( ३ ) नारदपरिव्राजकोपनि॰ अ॰८ । प॰४२६ । पृ॰२।पं॰६॥
( ४ ) माण्डूक्योपनिषत् श्रु॰ ४ । प॰ २५ । पृ॰ २ । पं॰ ९ ॥

अथ तैजसस्य नामानि ।

( १ ) तैजसः प्रातिभासिकस्स्वप्नकल्पित इति ॥ १०७ ॥

( २ ) हिरण्यगर्भः स्थूलोऽन्तर्द्वितीयः पाद उच्यते ॥ १०८ ॥

अथ तृतीयपादस्वरूपम् ।

( ३ ) सुषुप्तस्थान एकीभूतः[1] प्रज्ञानघन[2] एवानं[3]-न्दमयो ह्यानन्दं[4]भुक्चेतोमुखः[5] प्राज्ञ[6]स्तृतीयः पादः[7] ॥ १०९ ॥

---

१–अन्तःकरणादिविक्षेपाभावादेकतां प्राप्तः ॥ २–जाग्रत्स्वप्नज्ञानानां कारणरूपेण घन एव पिण्डीभावो यस्मिन् सः ॥ ३–स्वरूपसुखाभिव्यक्तिप्रतिबन्धकदुःखाभावादानन्दमयः ॥ ४–आनन्दं विक्षेपाभावादात्मसुखं भुंक्तेऽज्ञानवृत्तिभिरनुभवतीत्यानन्दभुक् ॥ ५–चेतः स्वप्नजागरितं प्रति कारणत्वेन मुखं द्वारभूतं यस्य सः ॥ ६–प्रकृष्टे स्वयंप्रकाशानन्दात्मनि ज्ञानज्ञप्तिरज्ञानवृत्त्यात्मको बोधो यस्य सः प्रज्ञः प्रज्ञ एव प्राज्ञः ॥ ७–जागरितस्वप्नानन्तरभावित्वादात्मनस्तृतीयोंऽशः ॥

---

( १ ) पैंगलोपनि० अ० २ । प० ५६१ । पृ० १ । पं० २ ॥
( २ ) नारदपरिव्राजकोपनि० उ० ८ । प० ४२६ । पृ० २ । पं० ८ ॥
( ३ ) माण्डूक्योपनि० श्रु० ६ । प० २६ । पृ० १ । पं० ३ ॥

अथ प्राज्ञस्य नामानि ।

( १ ) प्राज्ञ अविच्छिन्नः पारमार्थिकस्सुषुप्त्यभिमानीति ॥ ११० ॥

( २ ) चतुरात्मेश्वरः[1] प्राज्ञस्तृतीयः पादसंज्ञितः ॥ १११ ॥

( ३ ) भूतानां त्रयमप्येतत्सर्वोपरमबाधकः[2] ॥ तत्[3]सुषुप्तं हि यत्स्वप्नं मायामात्रं प्रकीर्त्तितम् ११२

अथ तुरीयावस्थालक्षणम् ।

( ४ ) केवलजीवयुक्तमेव तुरीयमिति ॥ ११३ ॥

अथ तुरीयपादस्वरूपम् ।

( ५ ) चतुर्थश्चतुरात्मा[4]ऽपि सच्चिदेकरसो

१–चतुर्णाम् आत्मनां मध्ये ईश्वरः ॥ २–सर्वोपरमस्यात्मज्ञानस्य बाधको निरोध इत्यर्थः ॥ ३–तत् जागरितम् ॥ ४–चतुर्विभागरूपः ।

( १ ) पैङ्गलोपनिषद् अ० २ । प० ५६१ । पृ० १ । पं० ४ ॥

( २–३ ) नारदपरिव्राजकोपनि० उपदेश ८ । पत्र० ४२७ । पृ० १ । पं० ३।४ ॥

( ४ ) शारीरकोपनि० पत्र ६०५ । पृ० २ । पं० ४ ॥

( ५ ) नारदपरिव्राजकोपनि० उपदेश ८ । प०४२७।पृ०१।पं०५॥

ह्ययम् ॥ तुरीयावसितत्वाच्च एकैकत्वानु-
सारतः ॥ ११४ ॥

अथ तुरीयचैतन्यलक्षणम् ।

( १ ) अवस्थात्रयभावाभावसाक्षी स्वयं-
भावरहितं नैरन्तर्यं चैतन्यं यदा तदा तुरीयं
चैतन्यमित्युच्यते ॥ ११५ ॥

अथ कूटस्थलक्षणम् ।

( २ ) ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणि-
बुद्धिष्ववशिष्टतयोपलभ्यमानः सर्वप्राणिबु-
द्धिस्थो यदा तदा कूटस्थ[1] इत्युच्यते ॥ ११६ ॥

अथेश्वरकार्यमाह ।

( ३ ) ईक्षणाऽऽदिप्रवेशाऽन्ता सृष्टिरीशेन
कल्पिता ।

अथ जीवकार्यमाह ।

जाग्रदादिविमोक्षान्तस्संसारो जीवकल्पितः ११७

---

१–कूटे मायाकार्यविकारे घटाकाशवत् निर्विकारस्व-
रूपेण तिष्ठतीति कूटस्थः ।

---

( १ ) सर्वसारोपनि० पत्र ३२५ । पृ० २ । पं० ८ ॥
( २ ) सर्वसारोपनिषद् प० ३२६ । पृ० २ । पं० ४ ॥
( ३ ) वराहोपनि० अ० श्लो० ५४ । प० ८१४ । पृ० १ । पं० ७ ॥

अथ शक्तिद्वयमाह ।

( १ ) शक्तिद्वयं हि मायाया विक्षेपा[1]ऽऽवृत्तिरूपकम् ।

अथ विक्षेपशक्तिकार्यम् ।

विक्षेपशक्तिर्लिङ्गाऽऽदिब्रह्माऽण्डाऽन्तञ्जगत्सृजेत् ॥ ११८ ॥

अथाज्ञानरूपाऽऽवरणशक्तिलक्षणम् ।

( २ ) रज्जौ सर्पभ्रान्तिरिवाद्वितीये सर्वानुस्यूते सर्वमये ब्रह्मणि देवतिर्यङ्नरस्थावरस्त्रीपुरुषवर्णाश्रमबन्धमोक्षोपाधिनानात्मभेदकल्पितं ज्ञानमज्ञानम् ॥ ११९ ॥

अथाऽऽवरणशक्तिकार्यमाह ।

( ३ ) अन्त[2]र्दृग्दृश्य[3]योर्भेदं बहिश्च ब्रह्मसर्गयोः ॥ आवृणोत्यपराशक्तिस्सा संसारस्य कार-

१-रजःप्रधाना विक्षेपशक्तिः मलिनसत्त्वप्रधानाऽऽवरणशक्तिरज्ञानरूपेत्यर्थः ॥ २-अन्तःशरीरमध्ये ॥ ३-क्षेत्रज्ञक्षेत्रयोः आत्मशरीरयोरित्यर्थः ॥

( १ ) सरस्वतीरहस्योपनि० श्लो० १७ प० ८५२।पृ० १।पं०८ ॥
( २ ) निरालम्बोपनिषद् श्रु० प० ३२९ । पृ० २ । पं० १ ॥
( ३ ) सरस्वतीरहस्योपनि० श्लो० १८ से० । पत्र ८५२ । पृ० २ । पं० २ ॥

णम् ॥ १२० ॥ साक्षिणः पुरतो भातं लिङ्ग-देहेन संयुतम् ॥ चितिच्छायासमावेशाज्जीव-स्स्याद्व्यावहारिकः ॥ १२१ ॥ अस्य जीवत्वमारोपात्साऽक्षिण्यप्यवभासते ॥ आवृत्तौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥ १२२ ॥ तथा सर्गब्रह्मणोश्च भेदमा-वृत्य तिष्ठति ॥ या शक्तिस्तद्वशाद्ब्रह्म विकृ-तत्वेन भासते ॥ १२३ ॥ अत्राऽप्यावृत्ति-नाशेन विभाति ब्रह्मसर्गयोः ॥ भेदस्तयो-र्विकारस्स्यात्सर्गे न ब्रह्मणि क्वचित् ॥१२४॥

अथ सृष्टिस्वरूपं दृष्टान्तैराह ।

( १ ) किञ्चित्क्षुभितरूपा सा चिच्छ-क्तिश्चिन्मयाऽर्णवे ॥ तन्मयैव स्फुरत्त्यच्छा तत्रैवोर्मिरिवार्णवे ॥ १२५ ॥

( २ ) रेखोपरेखावलिता यथैषा पीवरी शिला ॥ तथा त्रैलोक्यवलितं ब्रह्मैक्य-मिह दृश्यते ॥ १२६ ॥

---

१–कूटस्थरूपे ॥ २–पुष्टा शिला ॥

---

( १ ) महोपनिषद् अ० ५ । प० ५९४ । पृ० १ । पं० ३ ॥
( २ ) महोपनि० अ० ५ । प० ५९० । पृ० १ । पं० ४ ॥

( १ ) रज्ज्वज्ञानात्क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ॥ भाति तद्वच्चितिस्साक्षाद्विश्वाकारेण केवला ॥ १२७ ॥

( २ ) यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ॥ पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ १२८ ॥

( ३ ) यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ॥ घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ॥ जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥१२९ ॥

( ४ ) उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ॥ तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवाऽस्ति न चेतरत् ॥ १३० ॥

( ५ ) ब्रह्मणस्सर्वभूतानि जायन्ते परमाऽऽत्मनः ॥ तस्मादेतानि ब्रह्मैव भवन्तीति वि-

---

( १–२ ) योगशिखोपनि० अ० ४ । श्लो० २ । १५ । प०६२१ पृ० १ । २ । पं० २ । ८ ॥

( ३–४ ) योगशिखोपनिषद् अ० ४ । श्लो० १७ । ३ । प० ६२२ । ६२१ । पृ० १ । पं० १ । ३ ॥

( ५ ) योगशिखोपनि० अ० ४ । श्लो० ५ । ६ । ७ । प०६२१ पृ० १ । पं० ५ ॥

चिन्तय ॥ १३१ ॥ ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ॥ कर्माण्यपि समग्राणि बिभर्तीति विभावय ॥ १३२ ॥ सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् ॥ ब्रह्मणो जायमानस्य ब्रह्मत्वञ्च तथा भवेत् १३३

( १ ) अधिष्ठाने परे तत्त्वे कल्पिता रज्जुसर्पवत् ॥ १३४ ॥

( २ ) तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ॥ इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ १३५ ॥

( ३ ) कारणाऽभिन्नरूपेण कार्यं कारणमेव हि ॥ तद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु ॥ तच्च कारणमेकं हि न भिन्नं नोभयात्मकम् ॥ १३६ ॥

१–एकमभिन्ननिमित्तोपादानम् ॥

( १।२ ) अन्नपूर्णोपनिषद् अ० ४ । श्लो० १० । ७१ । पृ० ६६७ । पृ० २ । पं० ६ ॥

( ३ ) पञ्चब्रह्मोपनिषद् श्लो० ३१।३२ । प० ७८८ । पृ० १ । पं० २ ॥

( १ ) सर्वशक्तेर्महेशस्य विलासो हि मनो जगत् ॥ १३७ ॥

( २ ) स[1] वा ऽयं पुरुष[2]: सर्वासु[3] पूर्षु[4] पुरीशयो[5] नैनेन[6] किञ्चनावृतं[7] नैनेन किञ्चनासंवृतम्[8] ॥

( ३ ) रूपंरूपं[9] प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय[10] इन्द्रो[11] मायाभि[12]:पुरुरूप[13] ईयते[14] १३८

१-स वा स एव परमेश्वर एव ॥ २-प्रत्यगात्मरूपः ॥ ३।४-सर्वशरीरेषु ॥ ५-पुरि शेत इति पुरिशयः पुरुष उच्यते ॥ ६-नैनेनानेन ॥ ७-अनाच्छादितम् ॥ ८-अन्तरननुप्रवेशितम् ॥ बाह्यभूतेनान्तर्भूतेन च नानावृत्तम् ॥ एवं स एव नामरूपात्मनाऽन्तर्बाहिर्भावेन कार्यकारणरूपेण व्यवस्थितः ॥ ९-रूपान्तरम् ॥ अनुरूपो वा । यादृक् संस्थानं मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते ॥ १०-प्रतिख्यापनाय । यदि हि नामरूपे न व्याक्रियेते तदाऽस्यात्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रत्याख्यायेत । यदा पुनः कार्यकारणात्मना नामरूपे अव्याकृते व्याकृते भवतः तदाऽस्य रूपं प्रतिख्यायेत ॥ ११-परमेश्वरः ॥ १२-अविद्याप्रज्ञाभिर्नामरूपभूतकृतमिथ्याभिमानैर्वा न तु परमार्थतः ॥ १३-बहुरूपः ॥ १४-गम्यते ॥

( १ ) महोपनिषद् अ० ४ । श्लो० ८८ । प० ५८३।पृ० १।पं०६॥

( २-३ ) बृहदारण्यकोपनिषद् अ० २ । ब्रा० ५ । श्रु० १८।१९। प० १२९ । पृ० १ । पं० २ । ४ ॥

(१) स[1] यथार्द्रैधाग्नेरभ्याहितस्य[2] पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो[3] यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुरणविद्या[4] उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि[5] व्याख्यानानीष्टं[6] हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ १३९ ॥

अथ वेदान्तस्वरूपमाह ।

(२) निश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः ॥ तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठितः ॥ १४० ॥

---

१–स इति दृष्टान्तः ॥ २–आर्द्रैरेधोभिरिद्धोऽग्निरार्द्रैधाग्निस्तस्मात् ॥ ३–निश्वसितमिव निश्वासितम् । यथाऽप्रयत्नेनैव पुरुषनिश्वासो भवत्येवमेव ॥ ४–देवजनविद्या ॥ ५–मन्त्रविवरणानि ॥ ६–अर्थवादाः ॥

---

(१) बृहदारण्य० अ० ४ । ब्रा० ५ । श्रु० ११ । प० १५९ । पृ० १ । पं० ७ ॥

(२) मुक्तिकोपनि० अ० १ । श्लो० ९ । प०८५५।पृ०२।पं०३॥

अथ भावनार्थं विराट्स्वरूपम् ।

( १ ) भूस्ते आदिर्मध्यं[1] भुवः स्वस्ते शीर्षं विश्वरूपोऽसि ॥ १४१ ॥

( २ ) तस्य द्यौः[2] शिर आसीदुदरोऽन्तरिक्षं मध्य ७ समुद्रः पृथिवी पादौ स वा इदं विश्वम् ॥ १४२ ॥

( ३ ) अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च[3] वेदाः ॥ वायुः प्राणो हृदयं[4] विश्वमस्य[5] पद्भ्यां[6] पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ १४३ ॥

( ४ ) विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥ संबाहुभ्यां धमति

---

१-पादस्थानीयः ॥ २-द्युलोकः ॥ ३-उच्चारिताः ॥ ४-मनः ॥ ५-जगत् ॥ ६-पद्भ्यां जातेति शेषः यद्रूपेति भावः ॥

---

( १ ) अथर्वशिर उपनिषद् प० २३१ । पृ० २ । पं० ८ ॥
( २ ) सामविधानब्राह्मणम् प्रपाठक १ । खण्ड १ ॥
( ३ ) मुण्डकोपनि० मुण्डक २ । खं० १ । प० २२ । पृ० १ । पं० ४ ॥
( ४ ) श्वेताश्वतरोप० अ० १ श्लो० १२ । प० १८० । पृ० १ । पं० ९ ॥

सम्पतत्रैर्द्यावा भूमिञ्जनयन्देव एकः ॥ १४४ ॥

(१) शर्वस्सर्वस्य जगतो विधाता धर्त्ता हर्त्ता विश्वरूपत्वमेति ॥ १४५ ॥

(२) स्वयम्मृत्वा स्वयम्भूत्वा स्वयमेवावशिष्यते ॥ १४६ ॥

(३) नित्यशुद्धो निरञ्जनो विभुरद्वयशिव एकस्स्वेनैव भासेदं सर्वं सृष्ट्वा तप्तायःपिण्डवदेकं भिन्नवदवभासते ॥ १४७ ॥

(४) तस्मान्न भिन्नं नाभिन्नमाभिर्भिन्नो न वै प्रभुः ॥ १४८ ॥

(५) एकोह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशनीभिः । प्रत्यङ् जना-

(१) त्रिपुरोपनि० श्रु० १५ । प० ७२९ । पृ० २ । पं० ३ ॥
(२) कठरुद्रोप० श्लो० ४३ । प० ७३३ । पृ० २ । पं० ३ ॥
(३) त्रिशिखीब्राह्मणोप० प० ४३० । पृ० १ । पं० ६ ॥
(४) कृष्णोप० श्लो० २५ । प० ८०५ । पृ० २ । पं० ३ ॥
(५) अथर्वशिरउप० प० २३३ । पृ० २ । पं० ४ ॥

स्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोता। यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम्। तमीशानं पुरुषं देवमीडयं निचाय्येमां शान्तिमत्यन्तमेति ॥ १४९ ॥

( १ ) भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वम्प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १५० ॥

इति श्रीमन्मैथिलकुलालङ्कारबाबूनन्दनशर्म्म-
सङ्गृहीते श्रुतिसिद्धान्तसारसङ्ग्रहे
सृष्टिप्रकरणञ्चतुर्थम् ॥ ४ ॥

---

स्मृतिः। योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥

---

( १ ) श्वेताश्वतरोप० अ० ३। श्लो० ३। प० १८१। पृ० २। पं० ॥



ॐ ब्रह्मणे नमः ।

श्रुतिसिद्धान्तसारसंग्रहः ।

# अथ स्वरूपप्रकरणं पंचमम् ॥ ५ ॥



(१) सत्यं[1] ज्ञानम[2]नन्त[3]म्ब्रह्म[4] ॥ १ ॥

(२) प्र[5]ज्ञानम्ब्रह्म ॥ २ ॥

(३) वि[6]ज्ञानमा[7]नन्दम्ब्रह्म ॥ ३ ॥

१—मृदादिकार्यघटशरावादिषु मृदादिवत् यद्वस्तु कालत्रये प्यव्यभिचरितं तत्परमार्थभूतं सत्यमित्युच्यते अत्र सत्यपदेन ब्रह्मणो नामरूपक्रियात्मकजगद्विकाराद्व्यावृत्तिर्भवति ॥ २—ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्तिकोऽत्र ज्ञानशब्दः निर्विशेष-चिन्मात्रस्वरूपमित्यर्थः एतेन जडव्यावृत्तिरप्युक्ता ॥ ३—अन्तो देशकालपरिच्छेदो न विद्यते यस्य तदनन्तमित्यु-च्यते एतेन परिच्छेदव्यावृत्तिरुक्ता ॥ ४—बृहत्वाद्बृंहणत्वाद्ब्र-ह्मेत्युच्यते ॥ ५—ज्ञप्तिर्ज्ञानम् । प्रकृष्टं ज्ञानम्प्रज्ञानं शुद्धचैतन्य-मित्यर्थः ॥ ६—विशिष्टं ज्ञानं शुद्धचैतन्यम् ॥ ७—आनन्दं प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसपरमसुखस्वरूपम् ॥

(१) तैत्तिरीयोपनिषद् ब्रह्मवल्ली १ । अनुवाक १ । पत्र ३१ । पृष्ठ २ । पंक्ति १ ॥

(२) ऐतरेयोपनिषद् खण्ड५ । श्रुति ३ । प० ४१ । पृ० २ । पं० ८ ॥

(३) बृहदारण्यकोपनिषद् अ० २ । ब्रा० ९ । श्रु० २८ । प० ४१ । पृ० २ । पं० ८ ॥

( १ ) [1]एकमेवा[2]द्वितीयम्ब्रह्म ॥ ४ ॥

( २ ) अनन्त[3]मप्रमेयाऽखण्ड[4]परिपूर्ण-

म्ब्रह्म ॥ ५ ॥

सर्वपरिपूर्णम्ब्रह्म ॥ ६ ॥

आदिमध्यान्तशून्यम्ब्रह्म ॥ ७ ॥

आकाशवत्सर्वगतं सुसूक्ष्मं [5]निरञ्जनं निष्क्रियं सन्मात्रं चिदानन्दैकरसं शिवम्प्रशान्तममृतं तत्परम्ब्रह्म ॥ ८ ॥

( ३ ) सच्चिदानन्दतेजः[6]कूटरूपं तार-

कम्ब्रह्म ॥ ९ ॥

---

१-स्वगतसजातीयभेदद्वयरहितम् ॥ २-विजातीयभेदशून्यम् ॥ ३-प्रकर्षेण मीयते ज्ञायत इति प्रमेयन्तद्भिन्नम् ॥ ४-परितः समन्तात्पूर्णम् । व्यापकमित्यर्थः । ५-निर्गता अञ्जना माया यस्मिन्निति निरञ्जनम्मायोपाधिरहितम् ॥ ६-निर्विकारस्वरूपम् ॥

---

( १ ) शुकरहस्योपनिषद् प० ३३२ । पृ० २ । पं० ३ ॥

( २ ) त्रिपाद्विभूतिमहानारायणोपनिषद् अ० १ । प० ४७२ । पृ० १ । पं० ८ ॥

( ३ ) मण्डलब्राह्मणोपनिषद् ब्रा० २ । अ० ४ । प० ४५७ । पृ० १ । पं० ५ ॥

(१) परं ज्योतिस्स्वरूपं रूपवर्जितम् ॥१०॥

(२) सच्चिदानन्दस्वप्रकाशम्ब्रह्म ॥ ११ ॥

कालत्रयाबाधितम्ब्रह्म सर्वकालाबाधितम्ब्रह्म ॥ १२ ॥

मायातीतगुणातीतम्ब्रह्म मनोवाचामगोचरम्ब्रह्म ॥ १३ ॥

देशतः कालतो वस्तुतः परिच्छेदरहितम्ब्रह्म ॥ १४ ॥

अद्वैतमनिर्वाच्यम्ब्रह्म ॥ १५ ॥ अद्वितीयपरमानन्दशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नाऽपरिच्छिन्नं ब्रह्म ॥ १६ ॥

तुरीयं निराकारमेकम्ब्रह्म ॥ १७ ॥

नित्यानन्दमयम्ब्रह्म ॥ १८ ॥

---

(१) गोपालोत्तरतापन्युपनिषद् श्लोक २ । प० ७९९ । पृ० २ । पं० ३ ॥

(२) त्रिपाद्विभूतिमहानारायणोप० अ० १ । प० ४७२ । पृ० १ । पं० ॥

(१) ॐ खं ब्रह्म ॥ १९ ॥

ईशा वास्यमिदं सर्वम् ॥ २० ॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ २१ ॥

---

१-खम् आकाशवद्व्यापकम् ॥ २-ईशा ईश्वरेण तत्पदार्थ-लक्ष्यस्वरूपेण ॥ ३-वास्यम् आच्छादनीयम् । व्याप्तमिति यावत् सर्वमीश्वररूपमेवेति बुद्धिः करणीयेत्यर्थः ॥ ४-इदम् नानाप्रतीतिविषयभूतम् ॥ ५-सर्वम् निखिलं चतुर्दशभुवनस्थकार्यकारणात्मकं चराचरलक्षणम् ॥ ६-ईश्वररूपमात्मतत्त्वम् ॥ ७-वाय्वादिरूपेण चलति ॥ ८-स्वतो नैव चलति अक्रियत्वात् ॥ ९-अविदुषामत्यन्तदूरे वर्त्तते अज्ञानत्वात् वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्वा ॥ १०-उ एव अन्तिके विदुषामत्यन्तसमीपे प्रत्यग्रूपेण ज्ञातत्वात् ॥ ११-अन्तः अभ्यन्तरम् ॥ १२-बाह्यतः बहिश्च भवति आकाशवद्व्यापकत्वात् ॥

---

(१) ईशावास्योपनिषद् प० १ । पृ० १ । २ । पं० १ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धम-
पापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूः २२ ॥

(१) श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो
ह वाचꣳ स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः २३ ॥

---

१-सः ईश्वररूपाभिन्न आत्मा-पर्यगात्-परितः समन्तात्सर्वं व्याप्तवान् । शुक्रम्-दीप्यमानः । अकायम्-लिङ्गशरीररहितः । छिद्रविशेषो न विद्यते यस्य सोऽव्रणः । स्नावाः शिरास्तद्वर्जितः अव्रणमस्नाविरमिति विशेषणाभ्यां श्रुत्या स्थूलदेहस्य प्रतिषेधः कृतः । शुद्धम्-अविद्यामलरहितः अनेन कारणदेहप्रतिषेधः कृतः । अपापविद्धम्-धर्माधर्मादिपापशून्यः । कविः सर्वद्रष्टा । मनीषी मनस ईषिता । नानारूपैः परितः समन्ताद्भवतीति परिभूः । स्वयमेव भवतीति स्वयम्भूः कारणरहित इति यावत् ॥ २-शब्दोपलब्धेरसाधारणकारणस्य श्रोत्रेन्द्रियस्य ॥ ३-श्रोत्रम्-शब्दग्रहणसामर्थ्यकारणम् ॥ ४-मनसः-सर्वविषयोपलब्धेरसाधारणकारणस्य ॥ ५-मनः-सर्वविषये प्रवृत्तिकारणम् ॥ ६-शब्दोच्चारणसामर्थ्यस्य कारणम् ॥ ७-शरीरधारणसामर्थ्यस्य कारणम् ॥ ८-रूपोपलब्धिसामर्थ्यस्य कारणम् अयं समुदायार्थः श्रोत्रादीनां स्वस्वविषये प्रवृत्तिनियमस्य कारणभूतः श्रोत्रादिविलक्षणश्चेतनोऽस्ति संहतानां प्रसादादिवत्परार्थत्वनियमादिति ॥

---

(१) केनोपनिषद् खण्ड १ । प० २ । पृ० २ । पं० ३।४।७ ॥

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो[1] न विजानीमः[2] ॥ २४ ॥ यन्मनसा न मनुते[3] येनाहुर्मनो मतं[4] तदेव ब्रह्म त्वं विद्धि नेदं[5] यदिदमुपासते[6] ॥ २५ ॥

(१) प्रतिबोधविदितम्[8] मतममृतत्त्वं हि विन्दते ॥ २६ ॥

१-न विद्मः-श्रोत्रस्य श्रोत्रमित्यादिनोक्तोपदेशमन्तरेण आत्मदर्शनोपायं स्वबुद्ध्या वयं न जानीमः ॥ २-न विजानीमो विशेषतः शास्त्राचार्योपदेशतोऽपि तम्प्रकारन्नाधिगच्छामः ॥ ३-न मनुते-न कोपि पुरुषो जानाति ॥ ४-मतम्-दिज्ञातम् स्वकार्यकरणे समर्थम् ॥ ५-नेदम्-वागादिविषयभूतन्न ब्रह्मेति शेषः॥ ६-यत्प्रसिद्धमिदम्-उपाधिविशिष्टं ज्ञातृज्ञानज्ञेयभेदवदनात्मरूपम् । ७-उपासते-ध्यायन्ति जनाः ॥ ८-बोधपदम्बुद्धिवृत्तिपरम् तथा च बोधम्बोधम्प्रति विदितं सर्वबुद्धिवृत्तिसाक्षित्वेनावगतम्ब्रह्म ॥ ९-मतम्-ज्ञातम्भवति ॥

(१) केनोपनिषद् खं० २। प० ३। पृ० १। पं० ३॥

(१) न जायते म्रियते वा[1] विपश्चिन्नाऽयं
कुतश्चिन्न[3] बभूव कश्चित्[4] ॥ अजो नित्यः[2]
शाश्वतोऽयं[5] पुराणो[6] न हन्यते हन्यमाने
शरीरे ॥ २७ ॥

अणोरणीयान्[7,8]महतो महीयानात्माऽस्य ज-
न्तोर्निहितो[11] गुहायाम्[12] ॥ २८ ॥ अशरीरं
शरीरेष्वनवस्थेष्ववस्थितम्[13] । महान्तं[14] विभुमा-[15]
त्मानं मत्वा[16] धीरो न शोचति ॥ २९ ॥

---

१-वाशब्दश्चार्थे ॥ २-नित्यचैतन्यरूप आत्मा ॥ ३-कुताश्चित् कारणात् ॥ ४-कश्चित्कोप्यर्थान्तरभूतः ॥ ५-अपक्षयशून्यः ॥ ६-वृद्धिवर्जितः ॥ ७।८-अणोः सूक्ष्मात् तार्किकैर्नित्यत्वेनाभिमतात् मन आदेरात्मा अणीयान् अतिसूक्ष्मः ॥ ९।१०-महतो महापरिमाणात्तार्किकैर्महत्त्वेन नित्यतया चाभिमतात्कालादेरप्यात्मा महीयान् महत्तरस्तदधिष्ठानत्वात् ॥ ११-प्रत्यग्रूपत्वेन स्थितः ॥ १२-बुद्धौ ॥ १३-अनित्येषु ॥ १४-महद्रूपम् ॥ १५-व्यापकम् ॥ १६-आत्मत्वेन साक्षात्कृत्य ॥

---

( १ ) कठोपनिषद् अ० १ । वल्ली २ । प० ८ । पृ० १ । २ । पं० ९ । ५ ॥

(१) इन्द्रियेभ्यः परा ह्यर्था[1] अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महा[2]न्परः। महतः परम[3]व्यक्तमव्यक्तात्पुरु[4]षः परः॥ पुरुषान्न परं किंचित्सा काष्ठा[5] सा परा ग[6]तिः ॥ ३० ॥ अशब्दमस्पर्शमरूपम[7]व्ययं तथाऽरसं नि[8]त्यमगन्धवच्च यत् ॥ अ[9]नाद्यनन्तं म[10]हतः परं ध्रुवं नि[11]चाय्य तं[12]मृत्युमुखात्प्रमुच्यते ॥ ३१ ॥

---

१-अर्थाः-शब्दादिविषयाः इन्द्रियाणामर्थाधीनप्रवृत्तिमत्त्वात् ॥ २-समष्टिबुद्धिरूपः ॥ ३-सर्वजगतो बीजम्मायाख्यमव्याकृतम् ॥ ४-पूर्णत्वात्पुरुषो व्यापकः सकलजडवर्गप्रकाशक आत्मा ॥ ५-उक्तपरत्वानां विश्रान्तभूमिः ॥ ६-गन्तव्यफलरूपा ॥ ७-अपक्षयरहितम् ॥ ८-नाशरहितम्॥ ९-न विद्यते आदिः कारणं यस्य सोऽनादिः । न विद्यतेऽन्तः कार्यं यस्य सोऽनन्तः अनादिश्चासावनन्तश्च अनाद्यनन्तस्तम्॥ १०-महत्तत्त्वात् ॥ ११-ज्ञात्वा ॥ १२-जन्ममरणलक्षणात्संसारात् ॥

---

( १ ) कठोपनिषद् अ० २ । वल्ली ५ । प० १०। ११। पृ० १। पं० ६ ॥

स्वप्नान्तं[1] जागरितान्तं[2] चोभौ येना[3]नुप[4]श्यति
म[5]हांतं विभु[6]मात्मानं मत्वा धीरो न शोचति ॥
॥ ३२ ॥ अग्निर्यथैको भुवनं[7] प्र[8]विष्टो रूपं[9]-
रूपं प्र[10]तिरूपो ब[11]भूव ॥ एकस्तथा सर्वभूतान्त-
रात्मा रूपं[12]रूपं प्रतिरूपो[13] ब[14]हिश्च ॥ ३३ ॥
वायुर्यथैको भुवन[15]म्प्र[16]विष्टो रूपं[17]रूपं प्र[18]तिरूपो
बभूव ॥ एकस्तथा सर्वभूतान्तात्मा रूपंरूपं
प्रतिरूपो बहिश्च ॥ ३४ ॥ सूर्यो यथा सर्व-

---

१–स्वप्नकालिकवस्तुजातम् ॥ २–जागरितकालिकवस्तुजातम् ॥ ३–येन–साक्षिचैतन्येन ॥ ४–जानाति–लोक-इति शेषः ॥ ५–व्यापकम् ॥ ६–विविधरूपेण भवनशीलं सर्वकल्पनाधिष्ठानभूतम् ॥ ७–भवतीति भुवनं काष्ठसमूहः तम् ॥ ८–प्राप्तः सन् ॥ ९–नानाविधकाष्ठं प्रति ॥ १०–स्वोपाधिभूतकाष्ठसमानाकारः ॥ ११–भवति ॥ १२–वस्तुतस्तु तेजोरूपेण स्वोपाधिभूतकाष्ठेभ्यो विलक्षणः ॥ १३–प्रतिशरीरं तत्तच्छरीरसमानाकारः ॥ १४–बहिश्चेति स्वस्वरूपेण तत्तच्छरीराद्विलक्षण आकाशवन्निर्विकार एवेत्यर्थः ॥ १५–लोकं व्यष्टिसूक्ष्मशरीरम् ॥ १६–प्राणरूपेण प्राप्तः सन् ॥ १७–नानाशरीरं प्रति ॥ १८–तत्तच्छरीरतादात्म्येन तत्तच्छरीरसमाननानारूपः ॥

लोकस्य चक्षुर्न[1] लिप्यते चाक्षुषैर्[2]बाह्यदोषैः[3] ॥ एकस्तथा सर्व[4]भूताऽन्तरात्मा न लिप्यते लोकदुःखेन बाह्यः[5] ॥ ३८ ॥ एको वशी[6] सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ॥ तमात्मस्थं[7] येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥३६॥ नित्यो[8] नित्यानां[9] चेतन[10]श्चेतनाना[11]मेको बहूनां यो विदधाति कामान्॥तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ३७ ॥

---

१–आलोकने चक्षुष उपकारित्वाद्देवतारूपेण चक्षुषि स्थितत्वाद्वा चक्षुस्सूर्यः ॥ २–निषिद्धदर्शनद्वारा चक्षुर्जन्यपापात्मकैः ॥ ३–अशुचिवस्तुसंसर्गजन्याशुचित्वादिभिः ॥ ४–सर्वप्राणिनामन्तः–बुद्धौ स्थित आत्मा ॥ ५–देहद्वयसम्बन्धरहितः ॥ ६–सर्वं जगद्वशे वर्त्तते यस्य स वशी ॥ ७–बुद्धौ स्थितम् ॥ ८–अविनाशी सर्वकार्योत्पादनसामर्थ्यलयस्थानभूतप्रकृतेराधार इति यावत् ॥ ९–विनाशिनाम्भावानाम् ॥ १०–नियन्ता ॥ ११–चेतनानाम्–बुद्धिमतामपि ब्रह्मादीनाम् ॥ १२–संसारदुःखनिवृत्तिः ॥

( १ ) न तत्र सूर्यो भाति[2] न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥ तमेव[4] भान्त[5]-मनु[6]भाति सर्वं[7] तस्य[8] भासा[9] सर्वमिदं विभाति ३८

( २ ) यत्[10]तदद्रेश्यम्[11]अग्राह्यम्[12]अगोत्रम्[13]अवर्णम्[14]अचक्षुः[15]-श्रोत्रं तदपाणिपादम्[16] ॥ नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिम्[17] परिपश्यन्ति धीराः ॥ ३९ ॥

---

१–तस्मिन् स्वात्मभूते ब्रह्मणि ॥ २–प्रकाशयति प्रकाशते॥ ३–कुतः कथम्भायात् न भायादेव–न भासयेदेवेत्यर्थः ॥ ४–तमेव आत्मानमेव ॥ ५–भान्तम् दीप्यमानं सन्तम् ॥ ६–अनुभाति–तत्प्रकाशानन्तरं प्रकाशाश्रयो भवतीत्यर्थः ॥ ७–उक्तसूर्यादिकम् ॥ ८–तस्य प्रकाशरूपस्य ॥ ९–दीप्त्या ॥ १०–यत्–वेदान्तशास्त्रप्रसिद्धम्ब्रह्म ॥ ११–अद्रेश्यम्–अदृश्यं सर्वज्ञानेन्द्रियागम्यमित्यर्थः ॥ १२–अग्राह्यम्–कर्मेन्द्रियागम्यम् ॥ १३–अगोत्रम्–काश्यपाद्यन्वयरहितम् ॥ १४–अवर्णम्–वर्णाः द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयश्च तद्रहितम् ॥ १५–चक्षुःश्रोत्रादिज्ञानेन्द्रियरहितम् ॥ १६–पाणिपादादिकर्मेन्द्रियरहितम् ॥ १७–स्थावरजंगमानां कारणभूतम्॥

---

( १ ) कठोपनिषद् अ० २ । व० ५ । प०१२ । पृ० १ । पं०१॥
( २ ) मुण्डकोपनिषद् मुं० १ । २ । खं० १ । १ । श्रु० ६।७ । प० २० । पृ० २ । पं० २ ॥

बृहच्च तद्दि[1]व्यमचिन्त्यरूपं सूक्ष्माच्च तत्सू-
क्ष्मतरं वि[2]भाति ॥ दूरात्सु[3]दूरे तदिहा[4]न्तिके
च प[5]श्यत्स्विहैव नि[6]हितं गुहा[7]याम् ॥ ४० ॥

(१) ना[8]न्तःप्रज्ञं न[9] बहिष्प्रज्ञं नोभ[10]यतः
प्रज्ञं न प्रज्ञा[11]नघनं न प्र[12]ज्ञं नाप्र[13]ज्ञम् अ[14]दृष्टम[15]व्य-
वहार्य[16]मग्राह्यमल[17]क्षणम[18]चिन्त्यम[19]व्यपदेश्यमे-

---

१-स्वप्रकाशम् ॥ २-विविधं चन्द्रसूर्यादिरूपेण भाति दीप्यते ॥ ३-असमाहितचित्तानामत्यन्तदूरे प्रदेशे वर्त्तते ॥ ४-इह-शरीरे समाहितचित्तानामत्यन्तसमीपे एव स्थितम् ॥ ५-पश्यत्सु चेतनावत्सु प्राणिषु ॥ ६-स्थितम् ॥ ७-बुद्धौ ॥ ८-स्वप्नावस्थायां मनोविरचितविषयज्ञानशून्यम् ॥ ९-जागरितेन्द्रियजन्यविषयज्ञानरहितम् ॥ १०-जागरितस्वप्नयोः संध्यवस्थावबोधरहितम् ॥ ११-सुषुप्तावस्थायां जाग्रत्स्वप्नज्ञानानां कारणरूपेण घनीभावानाश्रयम् ॥ १२-युगपत्सर्वविषयज्ञातृत्वशून्यम् ॥ १३-न ज्ञानाभावरूपम् ॥ १४-ज्ञानेंद्रियाविषयभूतम् ॥ १५-अर्थक्रियारहितं हेयोपादेयरहितमित्यर्थः ॥ १६-कर्मेन्द्रियैरगम्यम् ॥ १७-अलिङ्गम् अननुमेयमिति यावत् ॥ १८-अन्तःकरणवृत्त्यविषयभूतम् ॥ १९-शब्दशक्त्यविषयभूतम् ॥

---

(१) माण्डूक्योपनिषद् श्रु० ७ । प० २६ । पृ० १ । पं० ५ ॥

[1]आत्मप्रत्ययसारम्प्रपञ्चोपशमं[2] शान्तं[3] शिव-मद्वैतं[4] चतुर्थं[5] मन्यन्ते स आत्मा स विज्ञेयः ॥४१॥

(१) एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः[6] सत्यकामः सत्यसंकल्पः ॥ ४२ ॥

(२) स एष इह प्रविष्ट[7] आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्यात् ॥ ४३ ॥

(३) एष हि द्रष्टा[8] स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः ॥४४॥

१–जाग्रदाद्यवस्थास्वेक एवात्मेत्याकारकः प्रत्ययोऽव्यभिचारिज्ञानमेव सारं प्रमाणं यस्मिंस्तत्तथा यद्वा एक आत्मप्रत्यय एव सारं प्रमाणं यस्य ॥ २–प्रपञ्चस्य कार्यकारणरूपस्योपशमोऽभावो यस्मिंस्तत्तथा ॥ ३–अक्रियम् ॥ ४–आनन्दस्वरूपम् ॥ ५–भेदशून्यम् ॥ ६–क्षुधारहितः ॥ ७–प्रवेशितः कार्यस्थस्योपलभ्यत्वमेव प्रवेश इत्युपचर्यते ॥ ८–चाक्षुषज्ञानाश्रयः चाक्षुषज्ञानकर्त्तेत्यर्थः एवं त्वाचश्रोत्रजघ्राणजरासनज्ञानाश्रयः मननकर्त्ता बोद्धृत्वाश्रयः कर्त्तृत्वाश्रयः विज्ञायतेऽनेनेति विज्ञानं तदात्मा तत्स्वभावः विज्ञानकर्तृरूप इत्यर्थः कारणोपाधिपूर्णत्वात्पुरुषः ॥

(१) छान्दोग्योपनिषद् प्रपा०८।खं० ७।प० ९७। पृ०२।पं०७॥
(२) बृहदारण्यकोपनिषद् अ०१।ब्रा०७।प०११२।पृ०१।पं०९॥
(३) प्रश्नोप० प्र० ४। प० १८। पृ०१।पं०२॥

( १ ) दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ॥ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ ४५ ॥

( २ ) ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ४६ ॥

( ३ ) योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ॥ ४७ ॥

( ४ ) अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥ ४८ ॥

( ५ ) असङ्गो ह्ययम्पुरुषः ॥ ४९ ॥

---

१-दीप्तिमान् स्वप्रकाशत्वेनलोकविलक्षणोऽलौकिको वा ॥ २-सर्वमूर्त्तिवर्जितः ॥ ३-अतिश्रेष्ठम् ॥ ४-उच्छित्तिरुच्छेदो विनाशो धर्मोऽस्येत्युच्छित्तिधर्मा स न भवतीत्यनुच्छित्तिधर्मा नापि विक्रियालक्षणो नाप्युच्छेदलक्षणो विनाशोऽस्य विद्यत इत्यर्थः ॥ ५-कार्यकरणमूर्तैः श्लेषो मूर्त्तस्य स तु क्रियाहेतुर्दृष्टः ॥ न ह्यमूर्त्तः क्रियावान्कश्चिद्दृश्यतेऽमूर्त्तश्चायमात्माऽतोऽसङ्गः ॥

---

( १-२ ) मुण्डकोपनि० मं० २ । खं० १, २ । प० २२-२३ । पृ० १, २ । पं० २, ३ ॥

( ३-४-५ ) बृहदारण्यकोपनि० अ० ४-४-६ । ब्रा० ३-५-३ । प० १४०-१६०-१५० । पृ० २-१-२ । पं० ३-२-७ ॥

(१) सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ॥ ९० ॥

(२) ततः परम्ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् ॥ विश्वस्यैकम्परिवेष्टितारं ईशं तं ज्ञात्त्वाऽमृता भवन्ति ॥ ९१ ॥

(३) यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाऽणीयो न ज्यायोस्ति कश्चित् ॥ वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९२ ॥

(४) सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥ ९३ ॥

(५) तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥ पतिं पतीनां परमम्परस्ताद्विदाम देवम्भुवनेशमीडयम् ॥ ९४ ॥

---

(१-२-३-४-५) श्वेताश्वतरोपनिषद् ॥

अ० १ । मन्त्र १६ । प० १२० । पृ० १ । पं० ६ ॥

" ३ । ७, ९ । १८१ । २ । १ । ८ । ४ । ७ ॥

" ४ । ९ । १८२ । २ । ७ ॥

" ६ । ७ । ८ । ९ । ११ । १८६ । २ । ३ । ८ ॥

( १ ) न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते॥ पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ५५ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ॥ सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ५६ ॥

( २ ) एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ५७ ॥

( ३ ) नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च ॥

( ४ ) निर्विकल्पमनल्पं च हेतुदृष्टान्तवर्जितम् ॥ ५८ ॥

( ५ ) घृतमिव पयसि निगूढं भूतेभूते च वसति विज्ञानम् ॥ ५९ ॥

---

( १-२ ) श्वेताश्वतरोपनिषद् अ० ६ । मं० ९ । ११ । प० १८६ । पृ० २ । पं० ८ ॥

( ३-४-५ ) ब्रह्मविन्दूपनिषद् श्लो० ६ । ९ । २० । प० १८८ । १८९ । पृ० २ । १ । पं० १ । ४ । ९ ॥

(१) आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च ॥

(२) स्वप्रभं सच्चिदानन्दम् ॥ ६० ॥

(३) एषोऽनन्तोऽव्यक्त आत्मा ॥ ६१ ॥

(४) सर्वेषु देहेषु व्याप्य वर्त्तते ॥ ६२ ॥

(५) अन्तर्बहिश्च नारायणः नारायण एवेदं सर्वम् ॥ ६३ ॥

(६) दिवीव चक्षुराततम् ॥ ६४ ॥

(७) एक एव तत्परं ब्रह्म विभाति निर्वाणम् ॥ ६५ ॥

(८) परमपरम्परायणश्चेति ॥ ६६ ॥

---

(१) कैवल्योपनिषद् श्लोक १५ । प० १९० । पृ० २ । पं० ८॥

(२) वासुदेवोपनिषद् प० ५३८ । पृ० २ । पं० ५ ॥

(३) जाबालोपनिषद् प० १९२ । पृ० २ । पं० १ ॥

(४) हंसोप० प० १९४ । पृ० २ । पं० १ ॥

(५) आरुणिको० प० १९७ । पृ० २ । पं० ५ ॥

(६) नारायणोप० प० २०१ । पृ० २ । पं० ३ ॥

(७) ब्रह्मोपनि० प० २२५ । पृ० २ । पं० ६ ॥

(८) अथर्वशिरउप० प० २३४ । पृ० १ । पं० ९ ॥

(१) व्यापनाद्व्यापी महादेवः ॥ ६७ ॥

(२) शिवशक्तिभ्यां नाव्याप्तमिह किञ्चन ॥ ६८ ॥

(३) सच्चिदानन्दमयम्परम्ब्रह्म ॥ ६९ ॥

(४) परमात्मा ज्ञानशक्तिः ॥ ७० ॥

(५) महदहङ्कारपृथिव्यप्तेजोवाय्वाकाशत्वेन बृहद्रूपेणाण्डकोशेन ब्रह्मज्ञानार्थरूपतया भासमानमद्वितीयमखिलोपाधिविनिर्मुक्त तत्सकलशक्त्युपबृंहितमनाद्यन्तं शुद्धं शिवं शान्तं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ ७१ ॥

(६) यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा ॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ७२ ॥

---

(१) अथर्वशिरउप० प० २३५ । पृ० १ । पं० ९ ॥
(२) बृहज्जाबालोपनि० प० २३७ । पृ० १ । पं० ५ ॥
(३) नृसिंहतापन्युपनि० खं० ६ । प० २८१ । पृ०२।पं०४ ॥
(४) कालाग्निरुद्रोपनिषद् प० ३०४ । पृ० १ । पं० ३ ॥
(५) निरालम्बोपनिषद् प० ३२८ । पृ० २ । पं० ३ ॥
(६) नारायणोपनिषद् प० २१० । पृ० १ । पं० ५ ॥

( १ ) सत्यमेव वाऽद्वितीयम्ब्रह्म ॥ ७३ ॥

( २ ) अमृतम्ब्रह्मभावकम् ॥ ७४ ॥

( ३ ) अयमात्मा अन्तर्याम्यमृतः ॥ ७५ ॥

( ४ ) कृष्णो ब्रह्मैव शाश्वतम् ॥ ७६ ॥

( ५ ) तमेकमेव पश्यन्ति परिशुभ्रं विभुं द्विजाः ॥ ७७ ॥

( ६ तिलानान्तु यथा तैलं पुष्पे गन्ध इवाश्रितः ॥ पुरुषस्य शरीरे तु स बाह्या-भ्यन्तरे स्थितः ॥ ७८ ॥ वृक्षं तु सकलं विद्याच्छाया तस्यैव निष्कला ॥ सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः ॥ ७९ ॥

( ७ ) स्वप्रकाशचिदानन्दं स हंस इति गीयते ॥ ८० ॥

---

( १ ) त्रिपाद्विभूतिमहानारा० अ०३ । प०४७८ । पृ०१। पं०७॥
( २ ) गरुडोपनिषद् प० ८३७ । पृ० २ । पं० १ ॥
( ३ ) हयग्रीवोपनि० प० ८३१ । पृ० २ । पं० ५ ॥
( ४ ) कृष्णोपनि० श्लो० १२ । प० ८०४ । पृ० २ । पं० ६ ॥
( ५ ) मन्त्रिकोपनिषद् श्लो० १६ । प०३२४ । पृ०२ । पं०८ ॥
( ६ ) ध्यानबिन्दूपनि० श्लो० ७।८ । प० ३७१ । पृ० २।पं०५॥
( ७ ) ब्रह्मविद्योपनिषद् श्लो० २१ । प०३९० । पृ०२ । पं० ७ ॥

(१) प्रत्यगानन्दम्ब्रह्म ॥ ८१ ॥

(२) आदि ब्रह्म स्वसंविद् ॥ ८२ ॥

(३) सत्यो नित्यः सर्वसाक्षी महेशो नित्यानन्दो निर्विकल्पो निराख्यः ॥ अचिन्त्यशक्तिर्भगवान्गिरीशः स्वाविद्यया कल्पितमानभूमिः ॥ ८३ ॥

(४) चिज्जडानां च यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः ॥ ८४ ॥

(५) सच्चिदानन्दस्वरूपम्ब्रह्मैव ॥ ८५ ॥

(६) परं ब्रह्म परं सत्त्यं सच्चिदानन्दलक्षणम् ॥ अप्रमेयमनिर्देश्यमवाङ्मनसगोचरम् ॥ ८६ ॥

शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् ॥ अनन्तमपरिच्छेद्यमनूपममनामयम् ॥ ८७ ॥

---

(१) आत्मबोधोपनि० प० ३९६ । पृ० १ । पं० २ ॥
(२) निर्वाणोपनिषद् प० ४५५ । पृ० १ । पं० ९ ॥
(३) शरभोपनिषद् श्लो० २० । प० ४६७ । पृ० २ । पं० ४ ॥
(४) स्कन्दोपनिषद् श्लो० ४ । प० ४६९ । पृ० १ । पं० ९ ॥
(५) अद्वयतारकोपनि० प० ५०९ । पृ० २ । पं० १ ॥
(६) योगशिखोपनि० अ०श्लो०१६।१७प०६१८।पृ०२।पं०८ ॥

( १ ) सर्वोत्कृष्टत्वसर्वात्मकत्वाऽद्वैतम् ॥८८॥
( २ ) केवलज्योतीरूपमनाद्यनन्तम् ॥८९॥
( ३ ) स सर्ववेत्ता भुवनस्य गोप्ता ॥ ९० ॥
( ४ ) ऋतं सत्यं परम्ब्रह्म सर्वसंसारभेषजम् ॥ अत्यर्थममलं नित्यमादिमध्यान्तवर्जितम् ॥ ९१ ॥
( ५ ) सूर्य आत्मा जगतस्तस्थुषश्च ॥ ९२ ॥
( ६ ) केवलाऽखण्डबोधः ॥ ९३ ॥
( ७ ) ब्रह्मैव केवलं शुद्धं विद्यते ॥ ९४ ॥
( ८ ) परमात्मस्वरूपो हंसः ॥ ९५ ॥
( ९ ) परं ब्रह्म पुरे विरजं निष्कलं शुभ्रमक्षरं विशोकं विभाति ॥ ९६ ॥

---

( १ ) तुरीयातीतोपनि० प० ६३३ । पृ० १ । पं० २ ॥
( २ ) अव्यक्तोपनि० प० ६५२ । पृ० २ । पं० ५ ॥
( ३ ) एकाक्षरोपनिषद् प० ६५७ । पृ० २ । पं० ७ ॥
( ४ ) अन्नपूर्णोपनिषद् अ० ५ । श्लो० ७२ । प० ६७७ । पृ० २ । पं० ९ ॥
( ५ ) सूर्योपनिषद् प० ६८१ । पृ० २ । पं० ४ ॥
( ६ ) कुण्डिकोपनि० प० ६९४ । पृ० २ । पं० १ ॥
( ७ ) आत्मोपनि० श्लो० ३ । प० ६९७ । पृ० २ । प० २ ॥
( ८ ) पशुपतिब्राह्मणोप० प० ७०० । पृ० १ । पं० २ ॥
( ९ ) परम्ब्रह्मोपनि० प० ७०५ । पृ० १ । पं० २ ॥

( १ ) परमपुरुषं चिद्रूपम्परमात्मेति ॥ ९७ ॥
( २ ) परमानन्दमया ज्ञानाम्बुराशयः ॥९८॥
( ३ ) सद्रूपम्परमं ब्रह्म त्रिःपरिच्छेदवर्जितम् ॥ ९९ ॥
( ४ ) स्वच्छं स्वतस्सिद्धमिति ॥ १०० ॥
( ५ ) सर्वाधिष्ठानमद्वन्द्वम्परम्ब्रह्म सनातनम् ॥ सच्चिदानन्दरूपं तदवाङ्मनसगोचरम् ॥ १०१ ॥
( ६ ) निष्कलं निर्गुणं शान्तं निरञ्जनमनामयम् ॥ १०२ ॥
( ७ ) परतत्त्वस्वरूपकम् ॥ १०३ ॥
( ८ ) सर्वज्ञ ईशः पशुपतिः ॥ १०४ ॥

---

( १ ) त्रिपुरातापन्युपनि० प० ७२३ । पृ० १ । पं० ९ ॥
( २ ) देव्युपनिषद् प० ७२७ । पृ० १ । पं० १ ॥
( ३ ) कठरुद्रोपनि० प० ७३२ । पृ० १ । पं० १ ॥
( ४ ) भावनोपनिषद् प० ७३५ । पृ० १ । पं० ९ ॥
( ५ ) रुद्रहृदयोपनि० श्लो० २६ । प० ७३८ । पृ० २ । पं०५॥
( ६ ) भस्मजाबालोप० प० ७५२ । पृ० १ । पं० ३ ॥
( ७ ) रुद्रजाबालोपनि० प० ७६२ । पृ० १ । पं० ४ ॥
( ८ ) जाबाल्युपनि० प० ८४३ । पृ० १ । पं० ८ ॥

(१) अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ १०५ ॥

(२) पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरसङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः सैवात्मा ॥१०६॥

(३) परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् ॥ सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम्॥१०७ प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ॥ अहेयमनुपादेयमनाध्येयमनाश्रयम् ॥ १०८॥ निर्गुणं निष्क्रियं सूक्ष्मं निर्विकल्पं निरञ्जनम् ॥ अनिरूप्यस्वरूपं यन्मनो वाचामगोचरम् ॥ सत्समृद्धं स्वतस्सिद्धं शुद्धम्बुद्धमनीदृशम् ॥ १०९ ॥

(४) प्रणवाद्यखिलमन्त्रात्मकम्ब्रह्म ॥११०॥ पादचतुष्टयात्मकम्ब्रह्म ॥ १११ ॥

---

(१-२) बह्वृचोपनिषद् प०८५४ । पृ० २। पं० १२ ॥

(३) अध्यात्मोपनिषद् श्लो०६०-२। प०६९१। पृ०२।पं०१॥

(४) त्रिपाद्विभूतिमहानारायणोप० अ० १ । प० ४७२ । पृ० १ । पं० ९ ॥

अविद्यापादः । विद्यापादः ॥
आनन्दपादः । तुरीयपादः ॥ ११२ ॥

(१) आविर्भूतं सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ ११३ ॥

(२) तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ ११४ ॥

(३) अवस्थात्रितयातीतं तुरीयं ब्रह्मसंज्ञितम् ॥ ११५ ॥

(४) सत्यानन्दचिदात्मकम् ॥ ११६ ॥

(५) असावादित्यो ब्रह्म ॥ ११७ ॥

(६) अमृतम्ब्रह्म ॥ ११८ ॥

---

१-सच्चिदानन्दपरमेश्वरस्वरूपमेव गणपतिस्वरूपेण प्रादुर्भूतम् ॥

---

(१) गणेशोपनिषद् प० ७६५ । पृ० २ । पं० ९ ॥
(२) तारसारोपनिषद् श्लो० ४ । प० ७८३ । पृ० १ । पं० १ ॥
(३) पञ्चब्रह्मोपनि० प० ७९६ । पृ० २ । पं० ७ ॥
(४) दत्तात्रेयोपनि० प० ८३४ । पृ० २ । पं० २ ॥
(५) महावाक्योपनि० प० ७८४ । पृ० २ । पं० ८ ॥
(६) प्राणाग्निहोत्रोप० प० ७८९ । पृ० १ । पं० ६ ॥

(१) यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ॥ ११९ ॥ पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ शिवः शैवागमस्थानां कालः कालैकवादिनाम् ॥ १२० ॥ यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥ यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः १२१

(२) समस्तसाक्षी सर्वात्मा सर्वभूतगुहाशयः ॥ सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ॥ १२२ ॥

इति श्रीमन्मैथिलकुलालङ्कारबाबूनन्दनशर्म्मसङ्गृहीते श्रुतिसिद्धान्तसारसङ्ग्रहे
स्वरूपप्रकरणम्पञ्चमम् ॥ ५ ॥

---

(१) अन्नपूर्णोपनिषद् अ० ३ । श्लो० १९।२० । प० ६६६ । पृ० २ । पं० ६ ॥

(२) ब्रह्मबिन्दूपनिषत् प० ३८६ । पृ० १ । पं० ७ ॥

# उपदेशप्रकरणं षष्ठम् ॥ ६ ॥



अथ मातृवद्धितैषिणी श्रुतिराह ।

(१) उत्तिष्ठत[1] जाग्रत[2] प्राप्य[3] वरान्निबोधत[4][5] । क्षुरस्य धारा निशिता[6] दुरत्यया[7] दुर्गं[8] पथस्[9]तत्कवयो वदन्ति ॥ १ ॥

(२) आचार्याद्धैव विद्या विदिता साधिष्ठं[10] प्रापयतीति ॥

---

१–हे अधिकारिणो जना यूयम् उत्तिष्ठत –ज्ञानाय प्रयतध्वम् आत्मज्ञानेऽभिमुखा भवत ॥ २–अज्ञाननिद्रां त्यजत ॥ ३–समीपं गत्वा ॥ ४–ब्रह्मविदाचार्यान् ॥ ५–तैरुपदिष्टमात्मतत्त्वं विजानीत ॥ ६–शाणसंघर्षणेन तीक्ष्णीकृता ॥ ७–यथा पद्भ्यां गन्तुमशक्या ॥ ८–तथा दुःखेन सम्पाद्यम् ॥ ९–पन्थानम् आत्मज्ञानलक्षणमार्गम् ॥ १०–अतिश्रेष्ठम् ॥

---

(१) कठवल्ली० अ० १ । व० ३ । श्रु०१४।प०९ । पृ० २ । पं०४॥
(२) छान्दोग्योपनि० प्र० ४ । ख०९ । प० ६९ । पृ०२।पं०१॥

(१) नैषा[1] तर्केण[2] मतिरापनेया[3] प्रोक्ताऽ[4]न्येनैव सु[5]ज्ञानाय प्रेष्ठ ॥ २ ॥

अथात्मज्ञानस्य फलमाह ।

(२) ब्रह्मविदाप्नोति परम् ॥ ३ ॥

(३) ब्रह्मविद् ब्रह्मैव भवति ॥ ४ ॥

(४) यतो वाचो नि[9]वर्त्तन्ते [10]अप्राप्य मनसा सह । आनन्दम्ब्रह्मणो विद्वान्न बिभेति कदाचन ॥ ५ ॥

(५) तरति शोकमात्मवित् ॥ ६ ॥

---

१-आत्मविषयिणी बुद्धिः ॥ २-स्वकल्पनामात्रेण ॥ ३-प्रापणीया ॥ ४-तार्किकादन्येन नास्तिकादिभ्यो भिन्नेन आगमविदाचार्येण ॥ ५-आत्मसाक्षात्काराय भवति ॥ ६-प्रियतम ॥ ७-ब्रह्मस्वरूपम् ॥ ८-यस्माद्यानन्दात्मनः स्वप्रकाशरूपात् ॥ ९-स्वसामर्थ्यहीना भवन्ति ॥ १०-तम् अप्रकाश्य ॥

---

(१) कठवल्ली० अ० २ । व० २ । प० ८ । पृ० १ । पं० १ ॥
(२) तैत्तिरीय० ब्र० व० अ० १ । प० ३१ । पृ० १ । पं०१ ॥
(३-४) तैत्तिरीयनिषद् ब्र०व० अ०४ । प०३२ । पृ०२।पं०२॥
(५) छान्दोग्योप० प्र० २ । खं० १ । प०८९ । पृ०१।पं०३॥

अथात्मज्ञानार्थं सलक्षणगुरुम्प्रति विधिवद्गमनमाह ।

( १ ) तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियम्ब्रह्मनिष्ठम् ॥ ७ ॥

अथ प्रार्थना ।

(२) सोऽहं भगवञ्शोचामि तं मां भगवाञ्छोकस्य पारं तारयतु ॥ ८ ॥

अथ सलक्षणशिष्यं प्रति ब्रह्मविद्योपदेशमाह ।

( ३ ) तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ॥ येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ ९ ॥

१-उपदेष्टारम् ॥ २-प्राप्नुयात्-तथा चोक्तम्-वेदान्तानामनेकत्त्वात्संशयानाम्बहुत्वतः ॥ वेद्यस्याऽप्यतिसूक्ष्मत्वान्न जानन्ति गुरुं विनेति ॥ ३-समिद्भारपाणिः ॥ ४-अधीतवेदवेदार्थम् ॥ ५-ब्रह्मणि निष्ठावन्तं ज्ञानिनम् ॥ ६-शास्त्रोक्तविधिना आगताय ॥

(१-२) मुण्डकोपनिष० मु० १ । खं०२ । प०२१ । पृ०२ । पं०६॥

( २ ) छान्दोग्योप० प्र०७ । खं०१ । प०८९ । पृ० १ । पं०६ ॥

तदुपदेशो यथा।

(१) न वा अरे सर्वस्य कामाय सर्वं प्रिय-म्भवत्यात्मनस्तु[2] कामाय सर्वं प्रियं भव-त्यात्मा वा अरे द्रष्टव्यः[3] श्रोतव्यो[4] मन्तव्यो[5] निदिध्यासितव्यो[6] मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥ १० ॥ स यथा दुन्दुभेर्हन्यमा-नस्य न बाह्यांञ्छब्दाञ्छक्नुयाद्ग्रहणाय[11]

१–प्रयोजनाय ॥ २–सर्वस्यात्मार्थत्वेन प्रियत्त्वम् आत्मनश्चानौपाधिकप्रियत्वेन परमानन्ददत्त्वमिति शेषः ॥ ३–प्रतीकमादाय व्याचष्टे–दर्शनार्हः दर्शनविषयत्वमापादयि-तव्यः ॥ ४–पूर्वाचार्यत आगमतश्च ॥ ५–तर्कतः ॥ ६–निश्च-येन ध्यातव्यः ॥ ७–कथं पुनरिदानीमिदं सर्वमात्मैवेति ग्रहीतुं शक्यते चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते। तत्र दृष्टान्त उच्यते–यत्स्वरूपव्यतिरेकेणाऽग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्टम्। स इति दृष्टान्तो यथा लोके ॥ ८–भेर्यादेः ॥ ९–ताड्यमानस्य दण्डादिना ॥ १०–बाहिर्भूता-ञ्छब्दविशेषान् दुन्दुभिशब्दसामान्यान्निष्कृष्टान् दुन्दुभिशब्द-विशेषान् ॥ ११–ग्रहीतुम्।

(१) बृहदारण्यकोपनिषद् अ० १। ब्रा० ४। श्रु० ५। प० १२४। पृ० २। पं०। ॥

दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ११ ॥

( १ ) तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीति ॥ १२ ॥

( २ ) भयादस्याग्निस्तपति भयात्तपति सूर्यः ॥ भयादिन्द्रश्च वायुश्च मृत्युर्धावति

१-दुन्दुभिशब्दसामान्यस्य ॥ २-दुन्दुभेराहननमाघातो दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ॥ ३-तद्गताः शब्दविशेषा गृहीता भवन्ति दुन्दुभिशब्दसामान्यविशेषत्वेन दुन्दुभिशब्दा एत इति शब्दविशेषा गृहीता भवन्ति दुन्दुभिशब्दसामान्यव्यतिरेकेणाभावत्तेषाम् । तथा प्रज्ञानघनव्यतिरेकेण स्वप्नजागरितयोर्न कश्चिद्वस्तुविशेषो गृह्यते तस्मात्प्रज्ञानघनव्यतिरेकेणाभावो युक्तस्तेषाम् ॥ ४-बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायोऽन्तरोभ्यन्तरः सन्निकृष्ट आत्मनस्तस्मादप्यन्तरादन्तरतरम् ॥ ५-पुत्रादिलक्षणम् ॥ ६-प्राणसंरोधं प्राप्स्यति ॥ ७-स्वस्वव्यापारं करोति ॥

( १ ) बृहदारण्यकोपनिषद् अ० १ । ब्रा० ८ । पं० ११२ । पृ० २ । प० ६ ॥

( २ ) कठवल्ली अ० १ । व० ६ । पं० १२ । पृ० १ । पं० ६ ॥

पञ्चमः ॥ महान्तं[1] वज्रमुद्यन्तं[2] य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥

(१) नायमात्मा प्रवचनेन[3] लभ्यो न मे[4]धया[6] न बहुना श्रुतेन ॥ [7]यमेवैष वृणुते तेन[8] [9]लभ्यस्तस्यैष आत्मा [11]वृणुते [12]तनुं स्वाम् ॥ १४ ॥

(२) आ[14]त्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ॥ बुद्धिं तु सारथिं विद्धि मनः प्र[15]ग्रहमेव च ॥ १५ ॥ इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ॥ आ[17]त्मेन्द्रियम-

१-२-उद्यतेन्द्रवज्रवद्भयहेतुभूतम् ॥ ३-वेदाध्ययनेन ॥ ४-ज्ञातुं शक्यः । ५-ग्रन्थार्थधारणशक्तिरूपया ॥ ६-उपनिषद्विचारातिरिक्तानेकशास्त्रश्रवणेन गुरूपदेशरहितोपनिषच्छ्रवणेनापि ॥ ७-स्वात्मानमेव ॥ ८-श्रवणमननादिभिः संभजते -श्रवणादिकालेऽपि ॥ प्रत्यग्ब्रह्मैवाहमित्यनुसंधत्त इति यावत् ॥ ९-अभेदानुसंधानवता पुरुषेण ॥ १०-ज्ञेयः स आत्मेति शेषः । ११-प्रकाशयति ॥ १२-आनन्दात्मस्वरूपम् ॥ १३-स्वकीयम् ॥ १४-जीवम् ॥ १५-रसनाम् ॥ १६-प्रचरणमार्गस्थानननीयान् ॥ १७-देहेन्द्रियमनोभिः सहितं चिदाभासम् ॥

(१) मुण्डकोपनिषद् मु० ३ । खं २ । प० २४। पृ० ३।पं०४॥

(२) कठवल्युपनिषद अ० १ । व० ३ । श्रु० प० ९ । पृ० १ । पं० १ ॥

नोयुक्तम्भोक्तेत्याहुर्मनीषिणः ॥ १६ ॥ यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ॥ तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ १७ ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ॥ तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ १८ ॥ यस्त्वविज्ञानवान्भवत्यम[१]नस्कः सदाऽशुचिः ॥ न स तत्पदमाप्नोति सं[२]सारं चाधिगच्छति॥ १९ ॥ यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ॥ स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ २० ॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ २१ ॥

( १ ) य[३]च्छेद्वाङ्[४]मनसी प्रा[५]ज्ञस्तद्यच्छेज्ज्ञा[६]न

१-अनिरुद्धमनाः ॥ २-संसारसमुद्रात्परं स्थानम् ॥ ३-निरुन्ध्यात् ॥ ४-वागादिसर्वेन्द्रियगणम् ॥ ५-आत्मजिज्ञासुः पुरुषः ॥ ६-व्यष्टिबुद्धौ ॥

( १ ) कठवल्ल्युपनिषद् अ० १२१ । व० ६ । प० १२ । १ । पृ० १-२ । पं० १ ॥

आत्मनि ॥ ज्ञानमात्मनि महति नियच्छे-
त्तद्यच्छेच्छान्त आत्मनि ॥ २२ ॥

(१) एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रका-
शते ॥ दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्म-
दर्शिभिः ॥ २३ ॥

(२) प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्ल-
क्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो
भवेत् ॥ २४ ॥

( ३ ) तावद्रथेन गन्तव्यं यावद्रथपथि
स्थितः ॥ स्थाता रथपतिस्थानं रथमुत्सृज्य
गच्छति ॥ २५ ॥

---

१–बुद्धितत्त्वम् ॥ २–समष्टिबुद्धिरूपे ॥ ३–निर्विकारे ॥ ४–प्रत्यगात्मनि सर्वकारणव्यापारसाक्षिणि ॥ ५–अविद्याच्छादितः सन् ॥ ६–मुख्यया गुरूपदिष्टमहावाक्यजन्यया ॥ ७–सूक्ष्मपदार्थग्रहणसमर्थया ॥

---

(१) कठवल्ल्युपनिषद् अ० १२१। व० ६। प० १२।९। पृ० १।२। पं० १॥

(२) मुण्डकोपनि० मुं० २। ख० २। मं० ६। प०२३। पृ० १। पं० २॥

(३) अमृतनादोप० श्लो० ३। प० २२७। पृ० १। पं० ९॥

( १ ) इह[1] चेद[2]शकद्[3]बोद्धुं प्राक् शरीरस्य विस्रसः[4] ॥ ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ २६ ॥

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके, यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥२७॥

(२) यतो वा[7] इमानि भूतानि जायन्ते येन[8] जातानि जीवन्ति[9] यत्[10]प्रयन्त्य[11]भिसंविशन्ति[12] तद्[13]विजि[14]ज्ञासस्व तद्ब्रह्म ॥ २८ ॥

---

१–अस्मिन्मनुष्यशरीरे॥ २–शक्नोति॥ ३–ब्रह्म बोद्धुम्॥ ४–पातात् ॥ ५–साधनचतुष्टयसम्पन्नायाम्मनुष्यबुद्धौ ॥ ६–यस्मादुपादानात् ॥ ७–वै प्रसिद्धौ ॥ ८–कारणात्मना॥ ९–प्राणान्धारयन्ति वर्धन्ते ॥ १०–यत्र कारणब्रह्मणि ॥ ११–म्रियमाणानि सन्ति ॥ १२–तादात्म्यमेव प्रतिपद्यन्ते प्रलीयन्त इति यावत् ॥ १३–जन्मादिकारणभूतं वस्तु॥ १४–विशेषेण ज्ञातुमिच्छ ॥

---

( १ ) कठवल्ली अ० १ । व० २ । प० १२ । पृ०१ । पं० १ ॥

( २ ) तैत्तिरीयोपनिषद् भृगुवल्ली अनुवा० १ । प० ३५ । पृ० २ । पं० १ ॥

अथ जगद्ब्रह्मैक्यवाक्यानि ।

(१) सर्वं[1] खल्विदम्[2]ब्रह्म तज्जलानिति शान्त उपासीत ॥ २९ ॥

(२) सर्वं खल्विदम्ब्रह्म सगुणनिर्गुणस्वरूपं ब्रह्म ॥ ३० ॥

(३) समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ॥ ३१

---

१-समस्तम् ॥ २-खल्विति वाक्यालङ्कारार्थो निपातः ॥ ३-इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयम् ॥ ४-ब्रह्म-कारणम् निरतिशयमहत्त्वाद्ब्रह्म ॥ ५-तज्जलानिति तस्माद्ब्रह्मणो जातं तेजोऽबन्नादि क्रमेण सर्वम् अतस्तज्जम् । तथा तेनैव जननक्रमप्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यते इति तल्लम् । तथा तस्मिन्नेव स्थितिकालेऽनिति प्राणिति चेष्टत इति तदनम् । तज्जं च तल्लं च तदनं च तज्जलान् ब्रह्मण्युत्पत्तिविलयस्थितिमत् । अकारलोपश्छान्दसः इति । एवं ब्रह्मात्मतया त्रिषु कालेषु अविशिष्टम् तद्व्यतिरेकेणाग्रहणात्, अतस्तदेवेदं जगत् । ६-रागद्वेषादिदोषरहितः ॥

---

(१) छान्दोग्योप० प्रपा०१ । खं०१४ । प०६२ । पृ०१।पं०५॥
(२) त्रिपाद्विभूतिमहानारा० अ० १ । प०४०२ । पृ०१।पं०३॥
(३) महोपनिषद् अ० ५ । श्लो०१२ । प०५९९ । पृ०१।पं०७॥

( १ ) ब्रह्मैवेदं विश्वम् ॥ ३२ ॥

अथ जगदात्मैक्यम् ।

( २ ) इद ँ सर्वं यदयमात्मा ॥ ३३ ॥

( ३ ) आत्मैवेदं सर्वम् ॥ ३४ ॥

अथ जगद्ब्रह्मात्मैक्यम् ।

( ४ ) सर्वं ह्येतद्ब्रह्माऽयमात्मा ब्रह्म ॥ ३५ ॥

अथात्मब्रह्मैक्यम् ।

( ५ ) एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्म ॥ ३६ ॥

अथ जगन्मिथ्यावाक्यानि ।

( ६ ) एकमेवाऽद्वयम्ब्रह्म नेह नानास्ति किञ्चन ॥ ३७ ॥

( ७ ) मनसैवेदमाप्तव्यं नेह नानाऽस्ति

१-मनसैव-अचार्योपदेशपूर्वकपरमाऽर्थज्ञानसंस्कृतेन ॥
२-असति नानात्वे नानात्वमारोपयत्यविद्यया ॥

( १ ) मुण्डकोपनिषद् मुं० २ । खं० २ । प०२३ । पृ०२।पं०४॥
( २ ) बृहदारण्यक० अ०१।ब्रा०४।श्रु०६।प०१२५।पृ०१।पं०६ ॥
( ३ ) छान्दोग्योपनि० प्र०७। खं०२५। प०९६। पृ०२। पं०४ ॥
( ४ ) माण्डूक्योपनि० मं० ३ । प० २५ । पृ० २ । पं० ९ ॥
( ५ ) बृहदारण्यक०अ०६।ब्रा०४।श्रु०२५।प०१५७पृ०२।पं०१॥
( ६ ) अध्यात्मोपनि० श्लो० ६४ । प० ६९१ । पृ० २ । पं० ५ ॥
( ७ ) कठवल्ली अ० १ । व० २ । मं०१० । प० १०।पृ०२।पं०५॥

किञ्चन ॥ मृत्योस्[1]स मृत्युं[2] गच्छति य इह नानेव पश्यति ॥ ३८ ॥

(१) सत्यासत्यं जगन्नास्ति संकल्पकलनादिकम् ॥ वन्ध्याकुमारवचने भीतिश्चेदस्ति किञ्चन ॥ ३९ ॥ शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति तत् ॥ मृगतृष्णाजलम्पीत्वा तृप्तश्चेदस्त्विदं जगत् ॥ ४० ॥ गन्धर्वनगरे सत्ये जगद्भवति सर्वदा ॥ शुक्तिकारजतं सत्यं भूषणं चेज्जगद्भवेत् ॥ ४१ ॥ रज्जुसर्पेण दष्टश्चेन्नरो भवति संसृतिः ॥ चित्रस्थदीपैस्तमसो नाशश्चेदस्त्विदं जगत् ॥ ४२ ॥ तक्रं क्षीरस्वरूपं चेत्क्वचिन्नित्यं जगद्भवेत् ॥ गोस्तनादुद्भवं क्षीरम्पुनरारोपणं जगत् ॥ ॥ ४३ ॥ कूर्मरोम्णा गजे बद्धे जगदस्ति तदोत्कटे ॥ अग्नेरधश्चेज्ज्वलनं जगद्भवतु सर्वदा ॥ ४४ ॥ मशकेन हते सिंहे

१–मरणात् ॥ २–मरणम् ॥

(१) तेजोबिन्दूपनिषद् श्लो० ७१ से ९० ३६५ । पृ० १ । पं० २ ॥

जगत्सत्यं तदास्तु ते ॥ स्वप्नदृष्टं च यद्वस्तु जागरे चेज्जगद्भवः ॥ ४५ ॥ काको वा हंसवद्गच्छेज्जगद्भवतु निश्चलम् ॥ ज्ञानिनो हृदयम्मूढैर्ज्ञातं चेत्कल्पनं तदा ॥ ४६ ॥ भूमौ वा पतितं व्योम व्योमपुष्पं सुगन्धकम् ॥ शुद्धाकाशे वने जाते चलिते तु तदा जगत् ॥४७॥ अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्न हि ॥ सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥ ४८ ॥

अथ मायाकार्यभेददर्शनेन ब्रह्मोपदेशः ।

मायाकार्यमिदम्भेदमस्ति चेद्ब्रह्मभावनम् ॥ (१) आदावन्ते च यन्नास्ति वर्त्तमानेपि तत्तथा ॥ ४९ ॥

(२) विनष्टदिग्भ्रमस्यापि यथा पूर्वं विभाति दिक् ॥ तथा विज्ञानविध्वस्तं जगन्नास्तीति भावय ॥ ५० ॥

---

(१) चिद्घनानन्दकृतगीताभाष्ये ।

(२) महोपनिषद श्लो० २७ । ४६ । १०७ । १०८ प० ५७९ । ५८० । ५९३ । पृ० १ । २ । १ । पं० ६ । २ । ८ ॥

(१) यथा कटकशब्दार्थात्पृथग्भावो न काञ्चनात् ॥ न हेमकटकात्तद्वज्जगच्छब्दार्थता परा ॥ ९१ ॥

(२) सति दीप इवालोकः सत्यर्क इव वासरः ॥ सति पुष्प इवामोदश्चिति सत्यं जगत्तथा ॥ ९२ ॥ प्रतिभासत एवेदं न जगत्परमार्थतः ॥ ज्ञानदृष्टौ प्रसन्नायां प्रबोधविततोदये ॥ ९३ ॥

(३) चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् ॥ जीवत्वं च तथा ज्ञेयं रज्ज्वां सर्पग्रहो यथा ॥ ९४ ॥

(४) पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ९५[1]॥

---

१—शान्तिमन्त्रेषु व्याख्यातः ॥

---

(१।२) महोपनिषद् श्लो० २७। ४६। १०७। १०८। प० ५७९। ५८०। ५९३। पृ० १। २। १। पं० ६। २। ८॥

(३) योगशिखोपनि०, अ० । ४। श्लो० १। प० ६२०। पृ० २। पं० ९॥

(४) बृहदारण्यकोपनि० अ० ५। ब्रा० १। श्रु० १ पं० १६१। पृ० २। पं० १॥

( १ ) व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ॥ इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ५६ ॥ स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः ॥ यस्तिष्ठति विमूढात्मा भयं तस्यापि भाषितम् ॥ ५७ ॥ यदज्ञानाद्भवेद्द्वैतमितरत्तत्प्रपश्यति ॥ आत्मत्वेन तदा सर्वं नेतरत्तत्र चाऽण्वपि ॥ ५८ ॥ अनुभूतोप्ययं लोको व्यवहारक्षमोऽपि सन् ॥ असद्रूपो यथा स्वप्न उत्तरक्षणबाधितः ॥ ॥ ५९ ॥ स्वप्ने जागरितं नास्ति जागरे स्वप्नता नहि ॥ द्वयमेव लये नास्ति लयोपि ह्यनयोर्न च ॥ ६० ॥ त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् ॥ अस्य द्रष्टा गुणातीतो नित्यो ह्येष चिदात्मकः ॥ यद्वन्मृदि घट-

१–प्रतिदिनं कृतानुभवविषयतोपि । २ उत्तरक्षणे जाग्रदवस्थायाम्बाधितः विनष्टः । ३ सुषुप्त्यवस्थायाम् । ४ जाग्रत्स्वप्नयोः ॥

( १ ) योगशिखोपनिषद् अ० ४ । श्लोक २ । से पं० ६२१ । पृ० १ । पं० १ ॥

भ्रान्तिः शुक्तौ हि रजतस्थितिः ॥ तद्वद्ब्रह्मणि जीवत्वं वीक्ष्यमाणे विनश्यति ॥ ६२ ॥ यथा मृदि घटो नाना कनके कुण्डलाभिधा ॥ शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥ ६३ ॥ गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ॥ वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भासुरम् ॥ ६४ ॥ यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ॥ सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ॥ ६५ ॥ घटत्वेन यथा पृथ्वी जलत्वेन मरीचिका ॥ विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥६६॥ (१) एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ६७ ॥

(२) जलस्य चञ्चलादेव चञ्चलत्वं यथा रवेः ॥ तथाहङ्कारसम्बन्धादेव संसार आत्मनः ॥ ६८ ॥

१—जलस्थचन्द्रप्रतिबिम्बवत्॥ २—जलस्थसूर्यप्रतिबिम्बस्य॥

(१) ब्रह्मबिन्दूपनिषद् श्लो० १३ । प० १८८ । पृ० २ । पं० ८॥
(२) वराहोपनि० अ० २।श्लो० २० । प० ८१८। पृ० १।पं० २॥

( १ ) अहम्ममेति यो भावो देहाक्षादावनात्मनि ॥ अध्यासोऽयं निरस्तव्यो विदुषा

१-स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणम् । तथा च संस्कारजन्यज्ञानाविषयत्वं शुक्तिरूपस्य स्मर्यमाणेन सादृश्यम् । एवं च स्मर्यमाणसदृशत्वे सति परत्रावभास्यत्वमध्यस्तत्वमिति सिद्धम् । अथवा-एकावच्छेदेन-स्वसंसृज्यमानाधिकरणे स्वात्यन्ताभाववत्त्वमवभास्यत्वमिति । साद्यनाद्यध्यस्तत्वसाधारणं निर्दिष्टं लक्षणम् ॥ यथेदं रजतमित्यत्र यदा शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽविद्या रजताकारेण परिणमते तदा शुक्तौ रजतत्वेन प्रतीयते । अयमेवार्थाध्यासः॥

यदा तु इदमिति शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽविद्या रजतज्ञानाकारेण परिणमते तदा शुक्तिज्ञानं रजतज्ञानत्वेन प्रतीयते । अयमेव ज्ञानाध्यासः ॥ अयं द्विविधोऽप्यध्यासः ज्ञानत्वेन ज्ञेयत्वेन च धर्म्यध्यास एव ॥ ततोऽध्यस्ते रजते शोभनत्वादि तज्ज्ञाने च रागप्रवृत्तिः प्रवर्त्तते । अयमेव धर्माध्यास इति ॥ एवं कूटस्थात्मन्यनाद्यविद्ययाऽहङ्काराध्यासोऽर्थाध्यासः । जानामीति ज्ञानाध्यासः ॥ अयं द्विविधोधर्म्मा-ध्यासः ॥ अहं मनुष्यो ब्राह्मण इत्यादिधर्माध्यास इति ॥ तत्राऽतस्मिँस्तद्बुद्धिर्ज्ञानाध्यासः ॥ यथा शुक्तौ रजतबुद्धिर्यथा वाऽऽत्मन्यनात्मबुद्धिः ॥ प्रमाणाऽजन्यज्ञानविषयः पूर्वदृष्टसजातीयोऽर्थाध्यासः ॥ जाड्यचैतन्यादिधर्माणां धर्मिणावहं--

( १ ) अध्यात्मोप० श्लो० १९-२२ । प० ६८७ । पृ०२ ।पं०२॥

ब्रह्मनिष्ठया ॥ ६९ ॥ ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् ॥ सोहमित्येव तद्वृत्त्या स्वान्यत्रात्मेति तन्त्यजेत् ॥ ७० ॥ ब्रह्मादि-स्तम्बपर्यन्तं मृषा मात्रा उपाधयः ॥ ततः पूर्णं स्वमात्मानं पश्येदेकात्मना स्थितम् ॥ ॥ ७१ ॥ जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ॥ तुषेण बद्धो व्रीहिस्स्यात्तु-षाभावेन तण्डुलः ॥ ७२ ॥ एवम्बद्धस्तथा जीवः कर्मनाशे सदा शिवः ॥ पाशबद्ध-स्तथा जीवः पाशमुक्तः सदाशिवः ॥ ७३ ॥ ( १ ) सन्त्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ॥ ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थ-कौस्तुभाः ॥ ७४ ॥

—ङ्कारात्मानौ तयोरत्यन्ताभिन्नयोरितरेतरभेदाग्रहेणान्यो न्यास्मिन्नन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यहार इति ॥

( १ ) महोपनिषद् श्लो० २० । प० ५९९ । पृ० २ । पं० ७ ॥

( १ ) तं स्वाच्छरीरात्[1]प्रवृहेन्मुञ्जा[2]दिवे[3]षीकां धैर्येण[4] ॥ ७५ ॥

( २ ) अस्ती[5]ति[6] ब्रुवतो[7]ऽन्यत्र[8] कथं[9]न्तत्[10]दुप[11]लभ्यते ॥ अस्तीत्ये[12]वोपलब्धव्य[13]स्तत्त्वभावेन[14] चोभयोः[15] ॥ अस्तीत्येवोपलब्धस्य[16] तत्त्वभावः[17] प्रसीदति[18] ॥ ७६ ॥

---

१-पृथक्कुर्यात् ॥ २-मुञ्जात्वरूपात् ॥ ३-एषीकां मध्यस्थशलाकाम् ॥ ४-चित्तसमाधानलक्षणेन ॥ ५-यदेवा लौकिकं जगत्कारणभूतमात्मवस्तु तदस्ति सद्रूपम् ॥ ६-इति एवम् ॥ ७-उक्तवतः ॥ ८-आस्तिकादन्यत्र नास्तिके ॥ ९-केन प्रकारेण ॥ १०-तदात्मतत्त्वम् ॥ ११-ज्ञायते न केनापि ॥ १२-प्रथमम्-अस्तीत्येव जगत्कारणलक्षणसद्रूपेणैवायमात्मा ॥ १३-ज्ञातव्यः ॥ १४-पश्चात्तत्त्वभावेन चोपाधिविनिर्मुक्तशुद्धरूपेण ज्ञातव्यः ॥ १५-उभयोः-अस्तित्वतत्त्वभावेनोक्तयोस्सोपाधिनिरुपाध्योर्मध्ये ॥ १६-निखिलकार्यस्य कारणमस्तीत्येवमास्तित्वेन ज्ञातस्यात्मनः ॥ १७-विदिताविदिताभ्यामन्यत्वेन श्रुतौ निर्दिष्टः परमार्थसद्रूपः ॥ १८-स्वस्वरूपप्रकाशनयाभिमुखीभवति ॥

---

( १-२ ): कठोपनिषद् अ० ५ । व० ६ । श्रु० १८ । प० १३ । १२ । पृ० १ । २ पं० २ । ७ ॥

( १ ) युक्त्या[१] श्रुत्या[२] स्वानुभूत्या[३] ज्ञात्वा सार्वात्म्यमात्मनः ॥ निद्राया लोकवार्त्तायाः शब्दादेरात्मविस्मृतेः ॥ क्वचिन्नाऽवसरं[४] दत्त्वा चिन्तयात्मानमात्मनि[५] ॥ ७७ ॥

( २ ) मनोऽध्यात्मम्[६] मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो मनसि यो मन्तव्ये यश्चन्द्रे यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन्त्सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा तमात्मानमुपासीताऽजरममृतमभयमशोकमनन्तम् ॥ ७८ ॥

( ३ ) केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु ॥ देहत्रयविहीनत्वात्कालत्रयविव-

१–मननेन ॥ २–श्रवणेन ॥ ३–निदिध्यासनेन ॥ ४–नावसरं नावकाशमित्यर्थः ॥ ५–स्वस्मिन् ॥ ६–आत्मानं शरीरम् अधिकृत्य वर्त्तत इत्यध्यात्मम् ॥

( १ ) अध्यात्मोपनिषत् श्लो० ४१५। प० ६८७। पृ० २ पं० ७॥
( २ ) सुबालोपनिषत् खं० ५। प० ३१३। पृ० २। पं० ३॥
( ३ ) तेजोबिन्दूपनिषद् अ० ५ श्लो० १७। १८। प० ३५४। पृ० २। पं० ५॥

र्जनात् ॥ ७९ ॥ जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ॥ लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥ ८० ॥

(१) यथा सौम्यैकेन मृत्पिण्डेन[1] सर्वम्मृ[2]न्मयं विज्ञातꣳस्याद्वा[3]चारम्भणं विकारो ना[4]मधेयं मृत्तिकेत्येव सत्यम् ॥ ८१ ॥

(२) यत्र[5] नान्यत्पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा[6]ऽथ यत्रा[7]न्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् ८२॥

(३) स[8] एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः सऽएवेदꣳ

---

१–घटशरावादिकारणभूतेन विज्ञानेन ॥ २–मृद्विकारजातम् ॥ ३–वागालम्बनम् ॥ ४–नामैव नामधेयम् ॥ ५–यस्मिन्भूम्नि तत्त्वे ॥ ६–भूमा–महन्निरतिशयम् बहु इति पर्यायाः । तत्सुखम् ॥ ७–अविद्याविषये ॥ ८–भूमा ।

---

(१–२) छान्दोग्योपनिष० प्र० ६ । ७ । खं० १ । २४ । प० ८२ । ९६ । पृ० १ । १ पं० ७ । ४ ॥

(३) छान्दोग्योपनिषद् प्रपा० ७ । खं० २५ । प० ९६ । पृ० १ । पं० ९ ॥

सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्ता-
दहमुपरिष्टादहं पश्चादहम्पुरस्तादहं दक्षिणतो-
ऽहमुत्तरतोऽहमेवेद ँ सर्वमित्यथात आत्मा-
देश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चा-
दात्मा पुरस्तादात्मा दक्षिणत आत्मोत्त-
रत आत्मैवेद ँ सर्वमिति स वा एष एवम्प-
श्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्म-
क्रीड आत्ममिथुन आत्मानन्दः स स्वरा-
ड्भवति तस्य सर्वेषु लोकेषु कामचारो
भवति अथ येऽन्यथातो विदुरन्यराजान-

---

१—द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽहंका-
रेण ॥ २—अहंकारेण देहादिसंघातोप्यादिश्यतेऽविवेकिभिरत-
स्तदाशंका माभूदित्यथानन्तरमात्मादेशः, आत्मैव केवलेन
सत्स्वरूपेण शुद्धेनादिश्यते ॥ ३—आत्मन्येव रतिः रमणं
यस्य सोऽयमात्मरतिः, तथाऽऽत्मक्रीडः रतिक्रीडयोरवान्तर-
भेदं दर्शयति—देहमात्रसाधना रतिः, बाह्यसाधना क्रीडा लोके
स्त्रीभिः सखिभिः क्रीडतीति दर्शनात् । न तथा विदुषः किं
तर्ह्यात्मविज्ञाननिमित्तमेवोभयं भवति । मिथुनं द्वन्द्वजनितं
सुखम् । तदपि द्वन्द्वनिरपेक्षं यस्य विदुषः सर्वत्र यदृच्छालाभे-
ष्वासङ्गवर्जितो विद्वान् आत्मनिमित्त एव सर्वः सर्वदा सर्व-
प्रकारेण चानन्दो यस्य सः ॥ ४—स्वाराज्येऽभिषिक्तः ॥

स्ते क्षय्यलोका भवन्ति तेषा ᳪ सर्वेषु लोके-
ष्वकामचारो भवति ॥ ८३ ॥
(१)ब्रह्म वा इदमग्र आसीत् तदात्मानमेवाऽवे-
दहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् ॥ ८४ ॥
य एवं वेदाऽहम्ब्रह्मास्मीति स इद ᳪ सर्वम्भवति
तस्य ह न देवाश्च नाभूत्त्या ईशते आत्मा ह्येषा ᳪ
संभवति॥८५॥अथ योऽन्यां देवतामुपास्तेऽ-
न्योऽसावन्योऽहमस्मीति न स वेद यथा
पशुरेव ᳪ स देवानां यथा ह वै बहवः पशवो
मनुष्य भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्ये-
कस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु

१-अपरम् तस्य परिच्छिन्नत्वाज्ज्ञानेन सर्वभावस्य साध्यत्वसंभवादिति ॥ २-वै अवधारणे ॥ ३-स्थावरजंगमलक्षणं जगत् ॥ ४-अग्रे-सृष्टेः प्राक् ॥ ५-ब्रह्मसर्वभावस्य ॥ ६-नाभूत्यै अभवनाय ॥ ७।८-नेशते न पर्याप्ताः ॥ ९-यः-कश्चिद्ब्रह्मविद् ॥ १०-आत्मव्यतिरिक्ताम् ॥ ११-पालयेयुः ॥ १२-पित्राद्युपलक्षणार्थम् ॥ १३-पालयति ॥ १४-व्याघ्रादिनाऽपह्रियमाणे ॥ १५-किं चित्रम् ॥

( १ ) बृहदारण्यकोपनिषद् अ० १ । ब्रा० ४ । श्रु० १ । प० ११३ । पृ० १ । पं० १ ॥

बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ ८६ ॥

(१) यथा रज्जुम्परित्यज्य सर्पं गृह्णाति वै भ्रमात् ॥ तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ८७ ॥ रज्जुखण्डे परिज्ञाते सर्परूपन्न तिष्ठति ॥ अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ॥ ८८ ॥

(२) दृश्यन्नास्तीति बोधेन मनसो दृश्यमार्जनम् ॥ ८९ ॥

(३) मनो विकल्पसञ्जातं तद्विकल्पपरिक्षयात् ॥ क्षीयते दग्धसंसारो निस्सार इति निश्चितः ॥ ९० ॥

१–ब्रह्मात्मतत्त्वम् ॥ २–विजानीयुः तथा च स्मृतिः क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः। न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥ ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य चैतानि मोक्षमिच्छन्पतत्यधः । इति व्यासस्य । ऋणोद्धारस्तु ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति । ऋणिनमश्रद्धादिभिरनृणं श्रद्धादियोजयन्ति देवाः ॥

( १ ) नादबिन्दूपनिषद् श्लो० २६।२७।प० ३६९ पृ० १। पं०७ ॥
( २–३ ) महोपनिषद् अ० २।३। श्लो० ३८।३४।प०५७१।५७०।पृ० १।२। पं० ३।७ ॥

(१) यत्र हि द्वैतमिव[2] भवति तदितर इतरम्पश्यति तदितर इतरं जिघ्रति तदितर इतर ँरसयते तदितर इतरमभिवदति तदितर इतर ँ शृणोति तदितर इतरं मनुते तदिइतर इतर ँ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन क ँ रसयेत्तत्केन कमभिवदेत्तत्केन क ँ शृणुयात्तत्केन कं मन्वीत तत्केन क ँ स्पृशेत्तत्केन कं विजानीयाद् येनेद ँ सर्वं विजानाति तं केन विजा-

---

१-यत्र-यस्मिन् अविद्याकल्पिते कार्यकारणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे ॥ २-भिन्नमिव वस्त्वन्तरमात्मन उपलभ्यते ॥ ३-सर्वेण कल्पितेन द्वैतेन सहितमधिष्ठानमूहितं ब्रह्मप्रत्यग्भावेन पश्यन्विद्वान्सर्वोपाधिस्तत्तद्रूपेण स्थितः सर्वो भवति ॥

---

(१) बृहदारण्यक० अ० ४। ब्रा० ५। श्रु० १५। प० १६०। पृ० १। पं० ३॥

नीयात् स एष ने[2]तिनेत्या[3]त्माऽगृह्यो नहि [4]गृह्यतेऽशीर्यो नहि [5]शीर्यतेऽसङ्गो नहि स[6]

१–यः सर्वात्मभावो निरुपाधिर्निरुपाख्योऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनोऽजोऽमरोऽमृतोऽभयोऽचलो मूर्त्तामूर्त्तब्राह्मणो क्तनेतिनेत्यस्थूलोऽनणुरित्येवं विशेषणो भवति स एषः ॥ २–सर्वोपाधिविशेषापोहेन यस्मिन्न कश्चिद्विशेषोऽस्ति नाम वा रूपं वा कर्म वा भेदो वा जातिर्वा गुणो वा । तद्वारेण हि शब्दप्रवृतिर्भवति । न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति, अतो न निर्देष्टुं शक्यत इदं तदिति । गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते तथाऽध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते विज्ञानमानन्दम्ब्रह्म विज्ञानघन एव ब्रह्माऽऽत्मेत्येवमादिशब्दैः । यदा पुनः स्वरूपमेव निर्दिदिक्षितम्भवति निरस्तसर्वोपाधिविशेषम् । तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम्, तदाऽयमेवाभ्युपायो यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण नेतिनेतीति निर्देशः । इदं च नकारद्वयं वीप्सया सर्वविषयसंग्रहार्थम् । इतिशब्दस्य प्रकृतमूर्त्तामूर्त्तादिपरामर्शित्वात् । यद् यत्प्राप्यते तत्तन्निषिध्यते ॥ ३–सोयमात्माऽगृह्यो न ग्राह्यः सर्वकार्यधर्मातीतत्वात् ॥ ४–यद्धि करणगोचरं व्याकृतं तद्ग्रहणगोचरम् । इदन्तु तद्विपरीतमात्मतत्त्वमतो नहि गृह्यत इति ॥ ५–यद्धि मूर्त्तं संहतं शरीरादि तच्छीर्यतेऽयं तु तद्विपरीतोऽतो नहि शीर्यते ॥ ६–मूर्त्तोऽमूर्त्तान्तरेण संबध्यमानः सज्यते नायं तद्विपरीतत्वात् ॥

ज्यतेऽ[1]सितो न [2]व्यथते न [3]रिष्यति विज्ञा-
तारमरे के[4]न विजानीयात् ॥ ९१ ॥

(१) तदेतद्ब्रह्मा[5]ऽपूर्व[6]मनपरमनन्तर[7]म[8]बाह्यम-
यमात्मा ब्रह्म [9]सर्वा[10]नुभूरि[11]त्यनुशासनम् ॥९२॥

(२) अदृष्टो द्रष्टा[12]ऽ[13]श्रु[14]तः श्रोताऽ[15]मतो मन्ताऽ-
विज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा

---

१–अबद्धः ॥ २–यद्धि मूर्त्तं तद्बध्यते अयन्तु तद्विपरीतत्वाद-बध्यत्वान्न व्यथते ॥ ३–ग्रहणविशरणसङ्गबन्धकार्यधर्मराहि-तत्वान्न रिष्यति न हिंसामापद्यते न विनश्यतीत्यर्थः अत्र कार्य-धर्माः शब्दादयोऽशनादयश्च ॥ ४–केन करणेन को वाऽन्यः ॥ ५–तदेतद्ब्रह्म य आतमा नास्य पूर्वं कारणं विद्यत इत्यपूर्वम् ॥ ६–नास्यापरं कार्यं विद्यत इत्यनपरम् ॥ ७–नास्य जात्यन्तर-मन्तराले विद्यत इत्यनन्तरम् ॥ ८–वहिरस्य न विद्यत इत्य-वाह्यम् । ९–किम्पुनस्तन्निरन्तरम्ब्रह्म अयमात्मा कोऽसौ यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता विज्ञाता । १०–सर्वात्मना सर्वमनुभवतीति सर्वानुभूः ॥ ११–इत्येतदनुशासनं सर्ववेदान्तो पदेशः ॥ १२–न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित् ॥ १३–स्वयन्तु चक्षुषि सन्निहितत्वाद्दृशिस्वरूपः ॥ १४–श्रोत्र-गोचरतामनापन्नः ॥ १५–मनः संकल्पविषयतामनापन्नः १६–निश्चयगोचरतामनापन्नः ।

---

( १ ) बृहदारण्यक० अ० ३ । ब्रा० ५ । श्रु० १९ । प०१२९ । पृ० १ । पं० ६ ॥

( २ ) ” ३ । ७ । २३ । १३८ । १ । ४ ॥

नान्योऽतोऽस्ति श्रोता नान्योतोस्ति मन्ता नाऽन्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतः ॥ ९३ ॥

( १ ) न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः एष त आत्मा सर्वान्तरः ॥ ९४ ॥

१–सर्वसंसारधर्मवर्जितः ॥ २–दृष्टिर्द्विविधा भवति लौकिकी पारमार्थिकी चेति तत्र लौकिकी ॥ या चक्षुस्सम्प्रयुक्तान्तःकरणवृत्तिः सा क्रियत इति जायते विनश्यति च या त्वात्मनो दृष्टिरग्न्युष्णप्रकाशादिवत्सा द्रष्टुः च स्वरूपत्वान्न जायते न विनश्यति च सा क्रियमाणयोपाधिभूतया संसृष्टेवेति व्यपदिश्यते द्रष्टेति भेदवच्च द्रष्टा दृष्टिरिति । याऽसौ लौकिकी दृष्टिश्चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्यया‌ऽऽत्मदृष्ट्या संसृष्टेव तत्प्रतिच्छाया तया व्याप्तैव जायते तथा विनश्यति च तेनोपचर्यते द्रष्टा सदा पश्यन्नपि न पश्यति चेति, नतु पुनर्द्रष्टुर्दृष्टेः कदाचिदप्यन्यथात्वम् । तथा च वक्ष्यति षष्ठे–ध्यायतीव लेलायतीव । यथा प्रदीपो लौकिकज्ञानेन प्रकाश्यो न स्वप्रकाशकं ज्ञानं

( १ ) बृहदा० अ० ३ । ब्र० ४ । श्रु० २ । पं० १३४ । पृ० १ । पं० ७ ॥

( १ ) नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ ९८ ॥

—प्रकाशयति तथा दृष्टिसाक्षी दृष्टया न प्रकाश्यत इत्यर्थः । दृष्टेः कर्मभूताया द्रष्टारं स्वकीयया नित्यया दृष्टया व्यापारं न पश्येः कर्मभूता लौकिकी दृष्टिः स्वात्मनो व्यापारं प्रत्यञ्चं न व्याप्नोति एवमग्रेऽपि ॥

१—सुषुप्तौ नहि यस्माद्द्रष्टुर्दृष्टिकर्त्तुर्याहिष्टिस्तस्या दृष्टेर्विपरिलोपो विनाशः स न विद्यते । २ यथाऽऽग्नेरौष्ण्यं यावदाग्नि भावि तथाऽय चात्माऽविनाशी अतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी यावद्द्रष्टृभाविनी हि सा । यथाऽऽदित्यादयो नित्यप्रकाशस्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति तथाऽयमात्माऽविपरिलुप्तस्वभावया दृष्टया नित्यया द्रष्टेत्युच्यते । ३—द्वितीयं विषयभूतम् । ४—तस्माद्द्रष्टुरन्यदन्यत्वेन विभक्तम् । ५—यदुपलभ्येत ॥

( १ ) बृहदारण्यकोपनिषद् अ० ३ । ब्रा० ३ । प० १५१ । पृ० २ पं० ९ ॥

अथ सुषुप्तावज्ञाने कारणभूतं दृष्टान्तमाह ।

(१) यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्यास्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति संपद्यामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति

१–मधुमाक्षिकाः । २–निष्पादयन्ति । ३–नानागतीनां नानादिक्कानां नानाफलानां वा ॥ ४–समाहृत्य ॥ ५–मधुत्वमापादयन्ति ॥ ६–सुषुप्तिकाले मरणप्रत्यययोश्च सन्मात्रे ॥ ७–सम्प्राप्य ॥ ८–यद्यत्पूर्वमिह लोके भवन्ति बभूवुरित्यर्थः॥ ९–तदेव पुनरागत्य भवन्ति युगसहस्रकोट्यन्तरितापि संसारिणो जन्तोर्या पुरा भाविता वासना सा न नश्यतीत्यर्थः ताः प्रजा यस्मिन्प्रविश्य पुनराविर्भवन्ति ये त्वितोऽन्ये सत्सत्यात्माभिसन्धायऋगुभाव सदात्मानं प्रविश्य नावर्तन्ते ॥

(१) छान्दोग्योपनिषद् प्र० ६ । खं० ९ । से० १६ । प०८८ । पृ० १ । पं० ५ ॥

स य एषोणिमैतदात्म्यमिद ँ सर्वं तत् सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो ॥ १६॥

अथ सतोऽहमागतोस्मीत्युत्थितस्य ज्ञानाभावं दृष्टान्तेनाह ।

इमाः सौम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरिय-

---

१-स य एषोऽणिमा-स यः सदाख्य एष उक्तोऽणिमा । अणुभावो जगतो मूलम् ॥ २-एतदात्म्यम्-एतत् सद् आत्मा यस्य सर्वस्य तदेतदात्मा तस्य भावः-एतेन सदाख्येनात्मना आत्मवत्सर्वमिदं जगत् नान्योस्त्यस्यात्मा संसारी॥ ३-येन चात्मनाऽऽत्मवत्सर्वमिदं जगत्तदेव सदाख्यं कारणं सत्यम्-परमार्थसत् ॥ ४-अतः स एवात्मा जगतः प्रत्यक्स्वरूपं स तत्त्वं याथात्म्यम् आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात् ॥ ५-अतः तत् सत् त्वमसि हे श्वेतकेतो-उद्दालकाऽऽरुणिसुत ॥ ६-पूर्वां दिशम्प्रति ॥ ७-इमा गङ्गाद्याः प्राच्यः प्रागञ्चनाः ॥ ८-स्रवन्ति ॥ ९-प्रतीचीं दिशं प्रति -सिन्ध्वाद्याः प्रतीचीमञ्चन्ति गच्छन्ति इति ॥ १०-११-जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः पुनस्समुद्रमम्भोधिमेवाभिगच्छन्ति ॥

महमस्मीयमहमस्मीति एवमेव खलु सौम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति स यऽएषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो ॥ १७ ॥

अथ जीवविनाशं शंकमानस्य प्रतिबोधनार्थं दृष्टान्तमाह ।

अस्य सौम्य[1] महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्[2]स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मनानु[3]प्रभूतः पेपीय[4]मानो मोद[5]-

---

१–अनेकशाखादियुक्तस्य ॥ २–यदि यः कश्चिदस्याग्रतः स्थितस्य मूलेऽभ्याहन्यात्परश्वादिना सकृद्घातमात्रेण न शुष्यतीति जीवन्नेव भवति तदा तस्य रसः स्रवेत् ॥ ३–अनुव्याप्तः ॥ ४–अत्यर्थम्पिबन्नुदकं भौमांश्च रसान्मूलैर्गृह्णन् ॥ ५–हर्षम्प्राप्नुवन् ॥

मानस्तिष्ठति अस्य यदेकां[1] शाखां जीवो जहात्यथ[2] सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति एवमेव खलु सौम्य विद्धीति होवाच जीवापेतं[3] वाव किलेदं म्रियते न जीवो[4] म्रियत इति स य एषोणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳस आत्मा तत्त्वमसि श्वेतकेतो ॥ ९८ ॥

अथ स्थूलस्य कार्यस्य सूक्ष्मं मुख्यकारणत्वमिति दृष्टान्तेनाह ।

न्यग्रोधफलमत आहरेतीदम्भगव इति ॥ भिन्धीति भिन्नम्भगव इति किमत्र पश्यसी-

---

१-शाखां रोगग्रस्तां वातोपहतां वा ॥ २-शाखायां विप्रसृतमात्मांशमुपसंहरति ॥ ३-जीववियुक्तमेव ॥ ४-कार्यशेषे च सुप्तोत्थितस्य ममेदं कार्यशेषमपरिसमाप्तमिति स्मृत्वा समापनदर्शनात् । जातमात्राणां च जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्चातीतजन्मान्तरानुभूतस्तनपानदुःखानुभवस्मृतिर्गम्यते । अग्निहोत्रादीनां च वैदिकानां कर्मणामर्थवत्त्वान्न जीवो म्रियत इति ॥

त्यण्व्य[1] इवेमा धाना[2] भगव इति आसामङ्गैकाम्भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति तꣳ होवाच यं वै सोम्यैतमणिमानं न[3] निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्त्यꣳस आत्मा तत्त्वमसि श्वेतकेतो ॥ ९९ ॥

अथ विद्यमानमपि वस्तु नोपलभ्यते प्रकारान्तरेण तूपलभ्यत इति दृष्टान्तेनाह ।

लवणमेतदुदकेऽवधायाथ[1] मा[2] प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा[3] अङ्ग[4] तदाहरेति तद्धा[5]ऽवमृश्य न विवेद यथा[6] वि[7]लीनमेवाऽङ्गास्यान्ता[8]-

---

१–अणुतराः ॥ २–बीजानि ॥ ३–न पश्यसि ॥

१–रात्रेरत्ययानन्तर्यमथशब्दार्थः॥ २–मा–माम्, प्रातः श्वः, उपसीदथाः उपागच्छेथाः ॥ ३–निक्षिप्तवान् ॥ ४–हे वत्स ॥ ५–तल्लवणमाजिहीर्षुर्ह किल, अवमृश्य विमृश्य ॥ ६–यद्यपि ॥ ७–विलीनं लवणं चक्षुषा स्पर्शनेन च नवेत्थ तथापि ॥ ८–अन्तात् उपरि गृहीत्वा ॥

दाचामेति कथमिति लवणमिति मध्या-
दाचामेति कथमिति लवणमित्[1]यन्तादाचामेति
कथमिति लवणमित्यभि[2]प्रास्यै[3]नदथं मोपसी-
दथा इति तद्ध त[4]था चकार तच्छश्वत्संवर्त्तते
त ँ होवाचात्र वाव किल सत्सौम्य न निभा-
लयसे[5]ऽत्रै[6]व किलेति स य एषोऽणिमैतदात्म्य-
मिद ँ सर्वं तत्सत्त्य ँ स आत्मा तत्त्वमसि
श्वेतकेतो ॥ १०० ॥

---

१-अन्तात् अधोदेशात् ॥ २-आचम्य माम् ॥ ३ । ४-लवणम्परित्यज्य पितृसमीपमाजगामेदं वचनमब्रुवन् तल्लवणम् शश्वत्-नित्यम् ॥ संवर्त्तते-विद्यमानमेव सत् संवर्त्तते ॥ ५-यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्वं गृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एवोपाया-न्तरेण जिह्वयोपलभ्यमानत्वात् एवमेवात्रैव ॥ अस्मिन्नेव तेजोबन्नादिकार्ये शुङ्गे देहे । वाव किलेत्याचार्योपदे-शस्मरणप्रदर्शनार्थौ । जगत्कारणम् इन्द्रियैर्नोपलभसे ॥

६-अत्रैव किल विद्यमानं सज्जगत्कारणमुपायान्तरेणो-पलप्स्यते इति वाक्यशेषः ॥

अथाचार्यवानेव वेदेति दृष्टान्तेनाह ।

यथा सौम्य पुरुषं गन्धारेभ्यो[1]ऽभिनद्धाक्ष[2]मानीय तं ततोऽतिजने[3] विसृजेत्[4]स यथा तत्र प्राङ्वोदङ्वा[5]ऽधराङ् प्रध्मापीता[6]भिनद्धाक्ष आनीतोऽभिनद्धाक्षो[7] विसृष्टः तस्य यथाभिहनं[8] नम्प्रमुच्य प्रब्रूया[9]देतां[10] दिशं गन्धारा एतां दिशंव्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो[11] मेधावी[12] गन्धारानेवोपसंपद्येत एवमेवेहाचार्यवान्पुरुषो वेद तस्य[13] तावदेव चिरं यावन्न

१–जनपदविशेषतः॥ २–बद्धचक्षुषम्। द्रव्यहर्ता तस्करोऽरण्ये इति शेषः ॥ ३–अत्यन्तविगतजने देशे ॥ ४–स तत्र दिग्भ्रमोपेतः ॥ ५–प्राङ् वा प्रागञ्चनः प्राङ्मुखो वा ॥ ६–प्रध्मायीत शब्दं कुर्याद्विक्रोशेत् ॥ ७–अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करेणानीतोऽभिनद्धाक्ष एव विसृष्ट इति ॥ ८–बन्धनं मुक्त्वा कारुणिकः कश्चित् ॥ ९–उपदिशेत् ॥ १०–एतां दिशमुत्तरतः ॥ ११–लब्धोपदेशः ॥ १२–परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः॥ १३–तस्यास्यैवमाचार्यवतो मुक्ताविद्याभिनहनस्य तावदेव –तावानेव कालश्चिरम्–क्षेपः सदात्मस्वरूपसम्पत्तेरिति वाक्यशेषः ॥

विमोक्ष्येऽथ संपत्स्य इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा०।०।

अथाचार्यवान्विद्वान्येन क्रमेण सत्सम्पद्यते तं क्रमं दृष्टान्तेनाह ।

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि माम् । जानासि मामिति तस्य यावन्न वाङ् मनसि सम्पद्यते, मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां, तावज्जानाति अथ यदाऽस्य वाङ् मनसि सम्पद्यते, मनः प्राणे प्राणस्तेजसि, तेजः परस्यान्देवतायामथ न जानाति, स यऽ-

---

१–विमोक्ष्यते येन कर्मणा शरीरमारब्धन्तस्योपभोगेन क्षयाद्देहपातो यावत् ॥ २–अथ–तदैव संपत्स्ये–सम्पत्स्यते ॥ ३–उत–अपि ज्वराद्युपतापवन्तम् ॥ ४–बान्धवाः ॥ ५–संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्सम्पत्तिक्रम इत्येतदाह परस्यां देवतायां तेजसि संपन्नेऽथ न जानाति। अविद्वांस्तु तस्माज्ज्ञातात्सदात्मनस्सकाशादुत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति । विद्वाँस्तु शास्त्राचार्योपदेशजनितज्ञानदीपप्रकाशितं सद्ब्रह्मात्मानं प्रविश्य नावर्त्तत इत्येष सत्सम्पत्तिक्रमः ॥

एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत् सत्यꣳ
स आत्मा तत् त्वमसि श्वेतकेतो ॥ १०२ ॥

तत्र विद्वान्सत्सम्पन्नो नावर्त्तते आवर्त्तते
त्वविद्वानित्यत्र कारणं दृष्टान्तेनाह।

पुरुषꣳ सौम्योत हस्तगृहीतमानयन्त्यपहा-
र्षीत् स्तेयमकार्षीत्परशुमस्मै तपतेति स
यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं
कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्त-
र्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ
हन्यते अथ यदि तस्याः कर्त्ता भवति
तत एव सत्यमात्मानं कुरुते स सत्याभि-
संधः सत्येनात्मानमन्तर्धाय परशुन्तप्तम्प्र-

१–पुरुषं चौर्यकर्मणि संदिह्यमानं निग्रहाय परीक्षणाय वा बद्धहस्तमानयन्ति राजपुरुषाः, किं कृतवानयमिति पृष्टाश्चाहुः–अस्य धनमयमपाहार्षीत् । ते चाहुः, किमपहरणमात्रेण बन्धनमर्हति अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुनराहुः, स्तेयमकार्षीच्चौर्येण धनमपाहार्षीदिति । तेष्वेवं वदत्स्वितरोऽपह्नुते नाहं तत्कर्त्तेति ते चाहुः–परशुमस्मै तपत इति शोधयत्वात्मानमिति ॥ २–स्तेयस्य ॥ ३–अन्यथा भूतम् ॥ ४–अनृतप्रतिज्ञावान् ॥ ५–व्यवहितं कृत्वा ॥

तिगृह्णाति, स न दह्यतेऽथ मुच्यते। स यथा तत्र नादाह्येतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो ॥ १०३ ॥

( १ ) यत्परम्ब्रह्म सर्वात्मा विश्वस्यायतनम्महत् ॥ सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १०४ ॥

---

१-मुच्यते मृषाभियोक्तृभ्यः। ततपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसन्धो दह्यते न तु सत्याभिसन्धः ॥ २-स यथा सत्याभिसन्धस्तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्तत्वान्न दह्यतेत्येतदेवं सद्ब्रह्मसत्यात्माभिसन्धीतरयोः शरीरपातकाले च तुल्यायां सत्सम्पत्तौ विद्वान्सतसम्पद्य न व्याघ्रादिदेवादिदेहग्रहणायाऽऽवर्त्तते। अविद्वांस्तु विकारानृताभिसंधः पुनर्व्याघ्रादिभावं देवादिभावं वा प्रतिपद्यते। यदात्माभिसन्ध्यनभिसंधिकृते मोक्षबन्धने यच्च मूलं जगतो यदायतना यत्प्रतिष्ठाश्च सर्वाः प्रजा यदात्मकं च सर्वं यच्चाजममृतमभयं शिवमद्वितीयं तत् ॥ ३-बृहत् देशकालवस्तुपरिच्छेदशून्यम् ॥ ४-सर्वप्राणिस्थितः ॥ ५-विश्वस्य सर्वस्य कार्यकारणजातस्यायतनमाधारभूतम् ॥ ६-प्रौढम् सर्वाधारत्वेनैव ॥ ७-तत् परम्ब्रह्म त्वमेव तव गन्तैव न त्वन्यत्। न तु तन्मत्तोऽन्यत् अहं तस्मादन्यः ॥ ८-मयि कर्त्तृत्वादिविशेषोपलम्भादित्यत आह-त्वमेव तत् त्वं कर्त्ता भोक्ताऽविद्यायाः वस्तुतः परम्ब्रह्मैव न त्वन्यः ॥

---

( १ ) कैवल्योपनिषद् श्लो० १६। प० १९१। पृ० १। पं० १॥

(१) मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ॥ भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १०५ ॥ द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ॥ दर्शनप्रथमाभासमात्मानं केवलम्भज ॥ १०६ ॥

(२) द्रष्टृदर्शनदृश्यानाम्मध्ये यद्दर्शनं स्मृतम् ॥ नाऽतः परतरं किञ्चिन्निश्चयोस्त्यपरो मुने ॥ १०७ ॥

(३) उभे सत्यानृते त्यक्त्वा येन त्यजति तत्त्यज ॥ १०८ ॥

(४) शुद्धं सदसतोर्म्मध्यम्पदम्बुद्ध्वाऽवलम्ब्य च ॥ सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥ १०९ ॥

---

(१) मैत्रेयोपनिषद् अ० २। श्लो० २८। २९। प०३०८। पृ० २। पं० १ ॥

(२) महोपनिष० अ० २। श्लो० ६९। प० ५७३। पृ०२। पं०३ ॥

(३) सन्न्यासोप० श्लो० १२। प० ६३६। पृ० १। पं०१ ॥

(४) महोपनिषद् अ० ५। श्लो० १७२। प० ५९७। पृ०२। पं०२॥

अथ पञ्चभ्रमास्तन्निवृत्तिश्च ।

( १ ) तदा मे मतिरुत्पन्ना जगद्वैचित्र्यदर्शनात् ॥ भ्रमः पञ्चविधो भाति तदेवेह स मुच्यते ॥ ११० ॥ जीवेश्वरौ भिन्नरूपाविति प्राथमिको भ्रमः ॥ आत्मनिष्ठं कर्तृगुणं वास्तवं वा द्वितीयकः ॥ १११ ॥ शरीरत्रयसंयुक्तजीवः सङ्गी तृतीयकः ॥ जगत्कारणरूपस्य विकारित्वं चतुर्थकः॥११२। कारणाद्भिन्नजगतः सत्यत्वम्पञ्चमो भ्रमः ॥ पञ्चभ्रमनिवृत्तिश्च तदा स्फुरति चेतसि ॥ ॥ ११३ ॥ बिम्बप्रतिबिम्बदर्शनेन भेदभ्रमो निवृत्तः ॥ स्फटिकलोहितदर्शनेन पारमार्थिककर्तृत्वभ्रमो निवृत्तः । घटमठाकाशदर्शनेन सङ्गीतिभ्रमो निवृत्तः ॥ रज्जुसर्पदर्शनेन कारणाद्भिन्नजगतः सत्यत्वभ्रमो निवृत्तः । कनकरुचकदर्शनेन विकारित्वभ्रमो निवृत्तः ॥ ११४ ॥ तदाप्रभृति मच्चित्तं ब्रह्म-

( १ ) अन्नपूर्णोप० अ० १ । श्लो० १२ । से १६ तक । प०६६९ । पृ० १ । पं० ७ ॥

कारमभूत्स्वयम् ॥ निदाघत्वमपीत्थं हि तत्त्वज्ञानमवाप्नुहि ॥ ११५ ॥

(१) घटसंवृतमाकाशं नीयमाने घटे यथा ॥ घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ ११६ ॥

(२) घटाकाशमठाकाशौ यथाऽऽकाशप्रभेदतः ॥ कल्पितौ परमौ जीवशिवरूपेण कल्पितौ ॥ ११७ ॥

अथ ब्रह्मशब्दार्थरूपा श्रुतिः ।

(३) यस्माद्बृहति ब्रह्मयति च सर्वं तस्मादुच्यते परम्ब्रह्मेति ॥

अथाऽऽत्मशब्दार्थः ।

यस्मात्सर्वमाप्नोति सर्वमादत्ते सर्वमत्ति च तस्मादुच्यते आत्मेति ॥ ११८ ॥

(४) यश्च विश्वं सृजति विश्वं बिभर्त्ति विश्वं भुङ्क्ते स आत्मा ॥ ११९ ॥

(१) त्रिपुरातापन्युपनिषद् उप० ५ । श्लो० १३ । प०७२४ । पृ० १ । पं० ९ ॥

(२) रुद्रहृदयोपनि० श्लो० ४३ । प० ७३९ । पृ०२। पं० ७ ॥

(३-४) शाण्डिल्योप० अ० ४ । २ । प० ५५७ । ५५६ । पृ० १ । पं० ४-३ ॥

(१) चेतनं चित्तरिक्तं हि प्रत्यक् चेतनमुच्यते ॥ १२० ॥

(२) चिदिहाऽस्तीति चिन्मात्रमिदं चिन्मयमेव च ॥ चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ १२१ ॥

(३) इयं पृथिवी सर्वेषां[1] भूतानां[2] मध्वस्यै[3] पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां[4] पृथिव्यां तेजोमयो[5]ऽमृतमयः[6] पुरुषो यश्चायमध्यात्मं[7] शारीरस्तेजोमयोऽमृतमयः पुरु-

१-ब्रह्मादिस्तम्बपर्यन्तानाम् ॥ २-प्राणिनाम् ॥ ३-मधुकार्यं मध्विव मधु ॥ यथैको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्तित एवमियं पृथिवी सर्वभूतनिर्वर्त्तिता ॥ ४-पृथिव्या अस्याः ॥ ५-चिन्मात्रप्रकाशमयः ॥ ६-अमरणधर्मा ॥ ७-शरीरे भवः शारीरः । स च लिङ्गाभिमानी । स च सर्वेषां भूतानामुपकारकरणत्वेन मधु । सर्वाणि च भूतान्यस्य मधु । चशब्दसामर्थ्यात् । एवं पृथिवी सर्वाणि भूतानि पार्थिवः पुरुषः-

(१) सन्न्यासोपनि० श्लो० ४५ । प० ६३९ । पृ० १। पं० ३ ॥
(२) याज्ञवल्क्योपनिषद् श्लो० २३ । प० ८०९ । पृ० १। पं० १ ॥
(३) बृहदारण्य० अ० २ । ब्रा० ५ । श्रु० १। से० १५। प० १२६ । पृ० २ । पं० २ ॥

षोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद ँ सर्वम् ॥ १२२ ॥ इमा आपः सर्वेषां भूतानां मध्वासामपा ँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म ँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद ँ सर्वम् ॥ १२३ ॥अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो

---

-शारीरश्चेति मधुचतुष्टयं तावदेकं सर्वभूतकार्यं सर्वाणि च भूतान्यस्य कार्यम् । अतोऽस्यैककारणपूर्वकता । यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरकार्यं वाचारम्भणं विकारो नामधेयमात्रमित्येष मधुपर्यायाणां सर्वेषामर्थः॥

१-अयमेव स योऽयं प्रतिज्ञात इदं सर्वं यदयमात्मेति ॥ २-इदमभृतं यन्मैत्रेय्याः अमृतत्त्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतम् ॥ ३-इदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञापयिष्यामीत्यध्यायादौ प्रकृतं यद्विषयया च विद्या ब्रह्मविद्येत्युच्यते ॥ ४-इदं सर्वं यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति ॥ ५-रेतस्यपां विशेषतोऽवस्थानम् ॥

यश्चायमध्यात्मं वाङ्मयस्तेजोमयो०॥ १२४॥ अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजो० ॥ १२५ ॥ अयमादित्यः सर्वेषां भूतानां मध्वस्याऽऽदित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयो० ॥ १२६ ॥ इमा दिशः सर्वेषां भूतानां मध्वासां दिशा ँ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म ँ श्रौत्रः प्रातिश्रुत्कस्तेजो० ॥ १२७ ॥ अयञ्चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि

---

१–वाच्यग्नेर्विशेषतोऽवस्थानम् ॥ २–अध्यात्मं प्राणो भूतानां शरीरारम्भकत्वेनोपकारान्मधुत्वं तदन्तर्गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वम् । तथा चोक्तं "तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः" । इति ॥ ३–प्रतिश्रवणवेलायां भवः विशेषतः सन्निहितः प्रातिश्रुत्कः ॥

भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयो० ॥ १२८ ॥ इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयो० ॥ १२९ ॥ अयꣳस्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳशाब्दः सौवरस्तेजोमयो० ॥ १३० ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याऽऽकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजामयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳहृद्याकाशस्तेजो० ॥ १३१ ॥

---

१-त्वक्तेजसि भवस्तैजसोऽध्यात्मम् ॥ २ शब्दे भवः शाब्दोऽध्यात्मं यद्यपि तथापि स्वरे विशेषतो भवतीति सौवरोऽध्यात्मम् ॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयो० ॥ १३२ ॥ इद ँ सत्य ँ-

१-आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकरणसंघातात्मान उपकुर्वन्तो मधु भवन्ति प्रतिशरीरिणमित्युक्तम् । येन ते प्रयुक्ताः शरीरिभिः सम्बध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते । अयं धर्मोऽयमित्यप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यतेऽयं धर्म इति प्रत्यक्षवत् । धर्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः क्षत्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिरनुष्ठीयमानरूपश्च । सत्यधर्मयोश्चाभेदेन निर्देशः कृतः शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश एकत्वे सत्यपि । दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात् । यस्त्वदृष्टोऽपूर्वाख्यो धर्मः स सामान्यविशेषात्मनाऽदृष्टेन रूपेण कार्यमारभते सामान्यरूपेण पृथिव्यादीनां प्रयोक्ता भवति विशेषरूपेण चाध्यात्मं कार्यकरणसंघातस्य । तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्मे तेजोमयस्तथाऽध्यात्मं कार्यकारणसंघातकर्तरि धर्मे भवः धार्मः ॥ २-तथा दृष्टेनानुष्ठीयमानेनाऽऽचाररूपेण सत्याख्यो भवति स एव धर्मः सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण । सामा-

सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयो० ॥ १३३ ॥ इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १३४ ॥ अयमात्मा सर्वेषां

---

–न्यरूपः पृथिव्यादिसमवेतो विशेषरूपः कार्यकारणसंघातसमवेतः। तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये तथाऽध्यात्मं कार्यकारणसंघातसमवेते सत्ये भवः सात्यः। सत्येन वायुरावातीति श्रुत्यन्तरात् ॥

१–धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकारणसंघातविशेषः। स येन जातिविशेषेण संयुक्तो भवति स जातिविशेषो मानुषादिः। तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते। अतो मानुषादिजातिरपि सर्वेषां भूतानां मधु। तत्र मानुषादिजातिरपि बाह्याध्यात्मिकी चेत्युभयथा निर्देशभाग्भवति ॥ २–यस्तु कार्यकारणसंघातो मानुषादिजातिविशिष्टः सोऽयमात्मा सर्वेषां भूतानां मधु नन्वयं शरीरशब्देन–

भूतानां मध्वस्याऽऽत्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृत-मयः पुरुषो यश्चायमात्मा तेजोमयोऽमृत-मयः पुरुषोऽयमेव स योऽयमात्मेद० ॥१३९॥

स[1] वा अयमात्मा सर्वेषां भूतानामधिपतिः[2] । सर्वेषां भूतानाꣳ राजा[3] तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मि-

---

-निर्दिष्टः पृथिवीपर्याय एव । न । पार्थिवांशस्यैव तत्र ग्रहणात् । इह तु सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूतादिसर्व-विशेषः सर्वभूतदेवतागणविशिष्टः कार्यकरणसंघातः सोऽय-मात्मेत्युच्यते तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरु-षोऽमूर्तरसः सर्वात्मको निर्दिश्यते । एकदेशेन तु पृथिव्यादिषु निर्दिष्टोऽत्राध्यात्मविशेषाभावात्स न निर्दिश्यते । यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसंघात आत्मा स यश्चायमात्मेत्युच्यते ॥

१–यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्याये सोऽयमात्मा । यस्मिन्नविद्याकृतकार्यकारणसंघातोपाधि-विशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स० ॥ २–कश्चि-द्राजोचित्तवृत्तिमाश्रित्य राजा न त्वधिपतिरतो विशिनष्ट्य-धिपतिरिति ॥ ३–न कुमारामात्यवत् ॥

आत्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्वं एत आत्मानः समर्पिताः ॥ १३६ ॥

अथ विभागशो महावाक्यार्थश्लोकाः प्रोच्यन्ते ॥

(१) येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ॥ स्वाद्वऽस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ १३७ ॥ चतुर्मुखेन्द्रदेवेषु मनुष्याऽश्वगवादिषु ॥ चैतन्यमेकं ब्रह्माऽतः प्रज्ञानं ब्रह्म मय्यपि ॥ १३८ ॥ परिपूर्णः परात्माऽस्मिन्देहे विद्याधिकारिणि ॥ बुद्धेस्साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ १३९॥ स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः॥ अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ॥ १४० ॥ एकमेवाऽद्वितीयं सन्नामरूपविवर्जितम् ॥ सृष्टेः पुराऽधुनाप्यस्य तादृक्-

---

१—अत्रार्थे योगवाशिष्ठोक्तश्लोकः—येन रूपं रसं गन्धं शब्दं जानासि राघव । तमात्मानं परं ब्रह्म जानीहि परमेश्वरम्॥

---

(१) शुकरहस्योपनिषद् श्लो० १-८ । प० ३३४ । पृ० १ । पं० ४॥

त्वन्तदितीर्यते ॥ १४१ ॥ श्रोतुर्देहेन्द्रियातीतवस्त्वत्र त्वम्पदेरितम् ॥ एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ १४२ ॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥ अहंकारादिदेहान्तं प्रत्यगात्मेति गीयते ॥१४३॥ दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते॥ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्सरूपकम् ॥१४४॥

( १ ) सत्त्यं ज्ञानमनन्तमानन्दम्ब्रह्म सत्त्यमविनाशि अविनाशि नामदेशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशि ॥ ज्ञानं नाम-उत्पत्तिविनाशरहितं नैरन्तर्यं चैतन्यं ज्ञानमित्युच्यते ॥ अनन्तं नाम मृद्विकारेषु मदिव, स्वर्णविकारेषु स्वर्णमिव, तन्तुविकारेषु तन्तुरिवाऽव्यक्तादिसृष्टिप्रपञ्चेषु पूर्णं व्यापकं चैतन्यमनन्तमित्युच्यते ॥ आनन्दन्नाम सुखचैतन्यस्वरूपोऽपरिमितानन्दसमुद्रोऽवशिष्टसुखस्वरूपश्चानन्द इत्युच्यते ॥ एतद्वस्तुचतुष्टयं

( १ ) सर्वसारोपनिषद् प० ३२६ । पृ० २ । पं० ९ ॥

यस्य लक्षणं देशकालवस्तुनिमित्तेष्वव्यभिचारी तत्पदार्थः परमात्मेत्युच्यते ॥ १४५ ॥

( १ ) सत्यं ज्ञानमनन्तमानन्दं सर्वोपाधिविनिर्मुक्तं कटकमुकुटाद्युपाधिरहितसुवर्णघनवद् विज्ञानचिन्मात्रस्वभावात्मा यदा भासते तदा त्वंपदार्थः ॥ १४६ ॥

( २ ) त्वम्पदार्थादौपाधिकात्तत्पदार्थादौपाधिकभेदाद्विलक्षणमाकाशवत्सूक्ष्मं केवलसत्तामात्रस्वभावं परम्ब्रह्मेत्युच्यते ॥ १४७ ॥

( ३ ) वाच्यं लक्ष्यमिति द्विधार्थसरणी वाच्यस्य हि त्वम्पदे वाच्यम्भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः ॥ वाच्यं तत्पदमीशताकृतमतिर्लक्ष्यन्तु सच्चित्सुखानन्दब्रह्म तदर्थ एष च तयोरैक्यन्त्वसीदम्पदम् ॥ ॥ १४८ ॥ त्वमिति तदिति कार्ये कारणे सत्युपाधौ द्वितयमितरथैकं सच्चिदानन्दरूपम् ॥ उभयवचनहेतू देशकालौ च हित्वा

( १।२ ) सर्वोपनिषद् प० ३२६ । ३२७ । पृ० २।१ ।पं०७। ६ ॥

( ३ ) शुकरहस्योपनिषद् श्लो० १० । ११ । १२ । प० ३३४ । पृ० २ । पं० ४ ॥

जगति भवति सोऽयन्देवदत्तो यथैकः ॥ ॥ १४९ ॥ कार्योपाधिरयञ्जीवः कारणोपाधिरीश्वरः ॥ कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ १५० ॥

( १ ) मायोपाधिर्जगद्योनिः[1] सर्वज्ञत्वादिलक्षणः ॥ पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ १५१ ॥ आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ॥ अन्तःकरणसम्भिन्नबोधः स त्वम्पदाभिधः ॥ १५२ ॥ मायाऽविद्ये विहायैव उपाधी परजीवयोः[2] ॥ अखण्डं सच्चिदानन्दम्परम्ब्रह्म विलक्ष्यते ॥ ॥ १५३ ॥ इत्थं वाक्यैस्तथार्थानुसन्धानं श्रवणं भवेत् ॥

अथ मननम् ।

युक्त्या[3] सम्भावितत्त्वानुसंधानम्मननन्तुतत् १५४

---

१—जगत्कारणरूपः ॥ २—ईश्वरजीवयोः ॥ ३—तर्केण । 'आगमस्याविरोधेन ऊहनं तर्क उच्यते' इत्यमृतनादोक्तम् ॥

---

( १ ) अध्यात्मोपनिषद् श्लो० ३० । ३१ । ३२ । ३३ । प० ६८९। पृ० २ । पं० १ ॥

( १ ) अनात्मदृष्टेरविवेकनिद्रामहम्ममस्वप्रगतिं गतोऽहम् ॥ स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ १६५ ॥

( २ ) जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् ॥ यद्बाह्यं जडमत्यन्तं तस्यां कथमहं विभुः ॥ ॥ १६६ ॥ कालेनाल्पेन विलयी देहो नाहमचेतनः ॥

( ३ ) असत्कल्पो विकल्पोऽयं विश्वमित्येकवस्तुनि ॥ निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ १६७ ॥

( ४ ) केवलं ब्रह्ममात्रत्वादहमात्मा सनातनः ॥ १६८ ॥

( ५ ) तरङ्गस्थन्द्रवं सिन्धुर्न वाञ्छति यथा तथा ॥ विषयानन्दवाञ्छा मे माभूदान-

---

( १ ) शुकरहस्योपनिषद् श्लो० ९ । प० ३३४ । पृ०५। पं०३ ॥
( २ ) संन्यासोपनि० श्लो०१३ । १४ । प०६३७। पृ०१।पं०१॥
( ३ ) अध्यात्मोप० श्लो० २२ । प० ६८९ । पृ० १ । पं० १ ॥
( ४ ) तेजोबिन्दूपनि० अ० ३ । श्लो० ३५ । प० ३४५ । पृ० २ । पं० ४ ॥
( ५ ) अध्यात्मोपनि० श्लो०१३ से ३० । प०३९७ । पृ०२।पं०१॥

न्दरूपतः ॥ १५९ ॥ विषन्दृष्ट्वाऽमृतन्दृष्ट्वा विषं त्यजति बुद्धिमान् ॥ आत्मानमपि दृष्ट्वा-हमनात्मानं त्यजाम्यहम् ॥ १६० ॥ घटा-वभासको भानुर्घटनाशे न नश्यति ॥ देहाव-भासकः साक्षी देहनाशे न नश्यति ॥१६१॥ न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥ मायामात्रविकासत्वान्मायातीतो-हमद्वयः ॥ १६२ ॥ प्राणाश्चलन्तु तद्धर्मैः[१] कामैर्वा हन्यताम्मनः ॥ आनन्दबुद्धिपू-र्णस्य मम दुःखं कथम्भवेत् ॥ १६३ ॥ आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानम्पलायि-तम् ॥ कर्त्तृत्त्वमद्य मे नष्टं कर्त्तव्यं वापि न क्वचित् ॥ १६४ ॥ ब्राह्मण्यं कुलगोत्रे च नाम सौन्दर्यजातयः ॥ स्थूलदेहगता ह्येते स्थूलाद्भिन्नस्य मे नहि ॥ १६५ ॥ क्षुत्पि-पासाऽऽन्ध्यबाधिर्यकामक्रोधादयोखिलाः ॥ लिङ्गदेहगता एते सलिङ्गस्य न विद्यते॥१६६॥

---

१-अशनापिपासाद्यैः ॥

जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ न सन्ति मम नित्त्यस्य निर्विकारस्वरूपिणः॥ ॥ १६७ ॥ उलूकस्य यथा भानुरन्धकारः प्रतीयते ॥ स्वप्रकाशे परानन्दे तमो मूढस्य जायते ॥ १६८ ॥ चक्षुर्दृष्टिनिरोधेऽभ्रैः[1] सूर्यो नास्तीति मन्यते ॥ तथाऽज्ञानावृतो देही ब्रह्म नास्तीति मन्यते ॥ १६९ ॥ यथाऽमृतं विषाद्भिन्नं विषदोषैर्न लिप्यते ॥ न स्पृशामि जडाद्भिन्नो जडदोषाऽप्रकाशतः ॥१७०॥ स्वल्पाऽपि दीपकणिका बहुलं नाशयेत्तमः ॥ स्वल्पोऽपि बोधो महती बहुलन्नाशयेत्तमः ॥ ॥ १७१ ॥ कालत्रये यथा सर्पो रज्जौ नास्ति तथा मयि ॥ अहङ्कारादिदेहान्तं जगन्नास्त्यहमद्वयः ॥ १७२ ॥ चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ॥ आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत् ॥ १७३ ॥

१–मेघैः ॥

( १ ) नाऽहन्देहो जन्ममृत्यू कुतो मे नाहम्प्राणः क्षुत्पिपासे कुतो मे ॥ नाहं चेतः शोकमोहौ कुतो मे नाहं कर्त्ता बन्धमोक्षौ कुतो मे ॥ १७४ ॥

( २ ) आनन्दमन्तर्निजमाश्रयन्तमाशापिशाचीमवमानयन्तम् ॥ आलोकयन्तञ्जगदिन्द्रजालमापत्कथम्माम्प्रविशेदसङ्गम् ॥ १७५ ॥

( ३ ) देवार्चनस्नानशौचभिक्षादौ वर्त्ततां वपुः ॥ तारं[१] जपतु वाक् तद्वत्पठत्वाम्नाय[२]मस्तकम् ॥ १७६ ॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ॥ साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ १७७ ॥

( ४ ) त्रिषु धामसु यद्भोग्यम्भोक्ता भोगश्च यद्भवेत् ॥ तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १७८ ॥

१-प्रणवम् ॥ २-वेदशिरोभागम् ॥ उपनिषदमित्यर्थः ॥

( १ ) महावाक्यरत्नावलिः ॥
( २ ) मैत्रेयोपनिषद् अ० १ । प० ३०६ । पृ० १ । पं० ९ ॥
( ३-४ ) कैवल्योपनिषद् श्लो० १९ प० १९१ । पृ० १ । पं० २ ॥

अथ निदिध्यासनम् ।

( १ ) तांभ्यां[1] निर्विचिकित्सेऽर्थे[2] चेतसः स्थापितस्य तत् ॥ ऐंकतानत्वमेतद्धि[3] निदिध्यांसनमुच्यते[4] ॥ १७९ ॥

( २ ) ब्रह्माहमस्मीति तत्त्वमस्यादिवाक्यार्थस्वरूपानुसंधानम् ॥ १८० ॥

( ३ ) सच्चिदानन्दमात्मानमद्वितीयम्ब्रह्म भावयेदात्मानं सच्चिदानन्दम्ब्रह्म भावयेत् ॥ १८१ ॥

( ४ ) परम्ब्रह्मैवाऽहमिति भावयेत् ॥ १८२ ॥

( ५ ) अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः ॥ पुरस्ति-

---

१–श्रवणमननाभ्याम् ॥ २–संशयनिर्मुक्तनिश्चितस्वरूपे ॥ ३–तैलादिधारावदेकतानत्वम् ॥ ४–नितरां ध्यायतेऽस्मिन्निति ॥

---

( १ ) अध्यात्मोपनि० श्लो० ३४ । प० ६८९ । पृ०२ । पं०६ ॥
( २ ) परमहंसोपनि० श्लो० ३४ । प० ६४५ । पृ०२ । पं०५ ॥
( ३ ) वज्रशूच्युपनिष० श्लो० प० ३३७ । पृ० १ । पं० ८ ॥
( ४ ) मुद्गलोपनिषद् प० ५४१ । पृ० १ । पं० ९ ॥
( ५ ) मुक्तिकोपनिषद् अ० २ । श्लो० ७४ । प० ८६५ । पृ० १ । पं० ८ ॥

रश्चोर्ध्वमधश्च सर्वतस्सुपूर्णभूमाऽहमितीह भावये ॥ १८३ ॥

( १ ) आत्मानं सच्चिदानन्दमनन्तम्ब्रह्म सुव्रत ॥ अहमस्मीत्यभिध्यायेद् ध्येयातीतं विमुक्तये ॥ १८४ ॥

( २ ) सर्वात्मकत्वम्भावयित्वा ॥ १८५ ॥

अथ सम्प्रज्ञातसमाधेर्लक्षणम् ।

( ३ ) ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिंविना ॥ सम्प्रज्ञातसमाधिस्स्याद्ध्यानाभ्यासप्रकर्षतः ॥ १८६ ॥

निर्विकल्पसमाधिः ।

( ४ ) ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ॥ निवातदीपवच्चित्तं समाधिरभिधीयते ॥ १८७ ॥

---

१-स्वमात्मानं सर्वात्मस्वरूपम् ॥ २-निर्विकल्पसमाधिरेवाऽसंप्रज्ञातो ज्ञातव्यः ॥

---

( १ ) श्रीजाबालदर्शनोप० खं० ९ । श्लो० ५ । प० ७८० । पृ० २ । पं० ३ ॥

( २ ) अक्षमालिकोपनि० प० ६५१ । पृ० २ । पं० ७ ॥

( ३ ) मुक्तिकोपनिषद् अ० २ । श्लो० ५३ । प० ८६३ ॥ पृ० २ । पं० ६ ॥

( ४ ) अध्यात्मोपनिषद् श्लो० ३५ । प० ६८९ । पृ०२। पं०७ ।

अथासम्प्रज्ञातसमाधेर्लक्षणम् ।

(१) प्रशान्तवृत्तिकं चित्तं परमानन्ददायकम् ॥ असम्प्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः ॥ १८८ ॥ प्रभाशून्यम्मनश्शून्यम्बुद्धिशून्यश्चिदात्मकम् ॥ अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ १८९ ॥ ऊर्ध्वपूर्णमधः पूर्णम्मध्यपूर्णं शिवात्मकम् ॥ साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥१९०॥

(२) वृत्तयस्तु तदानीमप्यज्ञाता आत्मगोचराः ॥ स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थिताः ॥ १९१ ॥

अथ समाधिफलम् ।

(३) समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं लभेत् ॥ न शक्यते

(१) मुक्तिकोपनिषद् अ० २ । श्लो० ५४ । ५५ । ५६ । प० ८६३ । पृ० २ । पं० ६ ॥

(२) अध्यात्मोपनिष० श्लो० ३६ । प०६८९ । पृ०२ । पं०८॥

(३) मैत्रायण्युपनि० प्रपाठक ४ श्रु० ९ । प० २४४ । पृ० १ । पं० १ ॥

वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ १९२ ॥

(१) यथैव बिम्बं[1] मृदयोपलिप्तं तेजोमयम्भ्राजते तत्सुधौतम्[2] ॥ तद्वाऽऽत्मतत्त्वं[3] प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १९३ ॥

(२) यत्समाधौ परं ज्योतिरनन्तं विश्वतोमुखम् ॥ तस्मिन्दृष्टे क्रियाकर्मयातायातो न विद्यते ॥ १९४ ॥

(३) अनादाविह संसारे सञ्चिताः कर्मकोटयः ॥ अनेन विलयं यान्ति शुद्धो धर्मो विवर्धते ॥ १९५ ॥

(४) तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मनः प्रदूयन्ते ॥ १९६ ॥

---

१–बिम्बं मण्यादीनां स्वरूपम् ॥ २–सुप्रक्षालितम् ॥ ३–तद्वत्–अविद्यातत्कार्यमलप्रक्षालनपूर्वकविज्ञानेन आत्मस्वरूपं प्रसमीक्ष्येत्यर्थः ॥

---

(१) श्वेताश्वतरोप० अ० २ । श्लो० १४ । प० १८१ । पृ० १ । पं० ७ ॥
(२) योगचूडामण्युपनिषद् श्लो० ११२ । प० ४५३ । पृ० २ । पं० ९ ॥
(३) अध्यात्मोपनि० श्लो० ३७ । प० ६१० । पृ० १ । पं० १ ॥
(४) गीताभाष्ये द्रष्टव्यम् ॥

(१) धर्ममेघमिमम्प्राहुः समाधिं योगवित्तमाः ॥ वर्षत्येष यथा धर्माऽमृतधारास्सहस्रशः ॥ १९७ ॥ अमुना वासनाजाले निःशेषं प्रविलापिते ॥ समूलोन्मूलिते पुण्यपापाख्ये कर्मसञ्चये ॥ १९८ ॥ वाक्यमप्रतिबुद्धं सत्प्राक्परोक्षाऽवभासिते॥ कराऽऽमलकवद्बोधमपरोक्षं प्रसूयते ॥ १९९ ॥

अथ वैराग्यादीनामवधिस्थानम् ।

वासनानुदयो भोग्ये वैराग्यस्य तदाऽवधिः ॥ अहम्भावो दयाभावे बोधस्य परमाऽवधिः ॥ ॥ २०० ॥ लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा ॥ स्थितप्रज्ञो यतिरयं यस्सदानन्दमश्नुते ॥ २०१ ॥ ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ॥ ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनि ॥ २०२ ॥ निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ॥ सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते २०३॥

---

(१) अध्यात्मोपनिषद् श्लो० ३८-४४। प०६९०।पृ०१।पं०२॥.

(१) भृष्टबीजोपमा[1] भूयो जन्माङ्कुरविवर्जिता ॥ हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥ २०४ ॥ पावनी परमोदारा शुद्धसत्त्वाऽनुपातिनी ॥ आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ॥ २०५ ॥

अथ सरूपमनोनाशः ।

(२) मैत्र्यादिभिर्गुणैर्युक्तः शान्तिमेति न संशयः ॥ भूयो जन्मविनिर्मुक्तजीवन्मुक्तस्य तन्मनः ॥ सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ २०६ ॥

अथ प्रारब्धस्य भोगे दृष्टान्तः ।

(३) स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम्[2] ॥ दैवेन[3] नीयते देहो यथाकालोपभुक्तिषु ॥ २०७ ॥

---

१–अग्न्यादिभ्यो भृष्टानि नष्टानि बीजानि अंकुरादिकारणभूतानि धान्यादीनां यथा नांकुरोत्पादनक्षमाणि तथा तानि उपमा यस्यास्सा ॥ २ नीचोच्चस्थलम् ॥ ३–प्रारब्धेन ॥ अमुना धर्ममेघेन समाधिना ॥

---

(१) सन्न्यासोपनिषद् श्लो० ४३।४४ । प०६३८। पृ०२।पं०९॥

(२) मुक्तिकोपनिषद् अ०२ । श्लो० ३४ । ३५ । प० ८६२ । पृ० २ । पं० २ ॥

(३) आत्मोपनिषद् श्लो०१८ । १९ । प०६९८ । पृ०२।पं०२॥

(१) सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्यते ॥ फलोदयः क्रियापूर्वो निष्क्रियो नहि कुत्रचित् ॥ २०८ ॥ अहम्ब्रह्मेतिविज्ञानात्कल्पकोटिशतार्जितम् ॥ संचितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥ २०९ ॥ स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा ॥ न श्लिष्यते यतिः किंचित्कदाचिद्भाविकर्मभिः ॥ २१० ॥ न नभो घटयोगेन सुरागन्धेन लिप्यते ॥ तथात्मोपाधियोगेन तद्धर्मै नैव लिप्यते ॥ २११ ॥ ज्ञानोदयात्पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति ॥ अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ २१२ ॥ व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ ॥ न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥ २१३ ॥ अजरोऽस्म्यमरोस्मीति य आत्मानं प्रपद्यते ॥ तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥ २१४ ॥ प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ॥

(१) अध्यात्मोपनि० श्लो० ४९।६० । प० ६९० । पृ० २ । पं० ५ ॥

देहात्मभावो[1] नैवेष्टः प्रारब्धं त्यज्यतामतः ॥ ॥ २१५ ॥ प्रारब्धकल्पनाप्यस्य देहस्य भ्रान्तिरेव हि ॥ अध्यस्त[2]तस्य कुतस्तत्त्वमसत्यस्य कुतो जनिः ॥ २१६ ॥ अजातस्य कुतो नाशः प्रारब्धमसतः[3] कुतः ॥ ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ॥ ॥ २१७॥ तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् ॥ समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ॥ न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥ २१८ ॥

( १ ) तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥ देहादीनामसत्त्वात्तु यथा स्वप्ने विबोधतः ॥२१९॥ कर्म जन्मान्तरीयं यत्प्रा-

१–देहेष्वात्मभावः ॥ २–शुक्तिकादिषु रजतादिवत् ब्रह्मात्मवस्तुनि इदञ्जगदवस्त्वाऽऽरोपितस्य ॥ ३–अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ॥ देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ॥ अज्ञानजनबोधार्थं प्रारब्धमिति चोच्यते ॥ इति नादबिन्दूपनिषत् ॥

( १ ) नादबिन्दूप० श्लो० २२।२३।२४।प० ३६९। पृ० १।पं० ३॥

रब्धमिति कीर्त्तितम् ॥ तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ॥ २२० ॥ स्वप्ने देहो यथाऽध्यस्तस्तथैवायं हि देहकः ॥ अध्यस्तस्य कुतो जन्म जन्माभावे कुतः स्थितिः ॥ २२१ ॥

( १ ) सर्वभूताधिवासश्च यद्भूतेषु वसत्यधि ॥ सर्वानुग्राहकत्वेन वासुदेवस्तदस्म्यहम् ॥ २२२ ॥

( २ ) स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् ॥ स सिद्धस्सुसुखं तिष्ठ निर्विकल्पात्मनात्मनि ॥ २२३ ॥ क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् ॥ अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥ २२४ ॥ किं हेयं किमुपादेयं किमन्यत्किं विलक्षणम् ॥ अखण्डानन्दपीयूषपूर्णब्रह्ममहार्णवे ॥ ॥ २२५ ॥ न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहम् ॥ स्वात्मनैव सदानन्दरूपेणास्मि स्वलक्षणः ॥ २२६ ॥ असङ्गोऽहम-

( १ ) ब्रह्मबिन्दूपनिषद् श्लो० २२ । प० १८९ । पृ० २ । पं० १ ॥
( २ ) अध्यात्मोपनिषद् श्लो० ६४–७१ । प० ६११ । पृ० २ । पं० ५ ॥

नङ्गोऽहमलिङ्गोहमहं हरिः ॥ प्रशान्तोहमनन्तोऽहं परिपूर्णश्चिरन्तनः ॥ २२७ ॥ अकर्त्ताऽहमभोक्ताहमविकारोऽहमव्ययः ॥ शुद्धो बोधस्वरूपोहं केवलोऽहं सदाशिवः ॥ २२८ ॥

(१) अहं सच्चित्परानन्दब्रह्मैवास्मि न चेतरत् ॥ २२९ ॥

(२) योऽसावसौ पुरुषः सोऽहमस्मि ॥ सर्वप्रकाशरूपोऽस्मि ॥ २३० ॥

(३) चिन्मात्रज्योतिरस्म्यहम् ॥ २३१ ॥

(४) सर्वपूर्णस्वरूपोस्मि सच्चिदानन्दलक्षणः ॥ २३२ ॥

(५) यथेक्षुरससंव्याप्ता शर्करा वर्त्तते पुनः ॥ अद्वयब्रह्मरूपेण व्याप्तोऽहं वै जगत्त्रयम् ॥ ॥ २३३ ॥ ब्रह्मादिकीटपर्यन्ताः प्राणिनो मयि कल्पिताः ॥ बुद्बुदादिविकारान्तस्तरङ्गस्सागरे यथा ॥ २३४ ॥

---

(१) महोपनिषद् अ० २ । श्लो० ११ । प० ३६९ । पृ० १ । पं० ८ ॥
(२) ईशावास्योप० प० २ । पृ० १ । पं० २ ॥
(३) मैत्रेय्योपनिष० अ० ३ । प० ३१० । पृ० १ । पं० २ ॥
(४) मैत्रेयोप० अ० ३ । प० ३०९ । पृ० १ । पं० ९ ॥
(५) आत्मबोधोप० श्लो० १३।१४ । प० ३९७ । पृ० २ । पं० १ ॥

(१) मयैव चेतनेनेमे सर्वे घटपटादयः ॥ सूर्यान्ता अवभासन्ते दीपेनेवात्मतेजसा ॥ ॥ २३५ ॥ मयैवैतास्स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ॥ तेजसाऽन्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ २३६ ॥ अनन्तानन्दसम्भोगापरोपशमशालिनी ॥ शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥२३७॥ सबाह्याभ्यन्तरव्यापी निष्कलोहं निरञ्जनः॥ निर्विकल्पचिदाभास एक आत्मास्मि सर्वगः ॥२३८॥

(२) दारिद्र्याशा यथा नास्ति सम्पन्नस्य तथा मम ॥ ब्रह्मानन्दे निमग्नस्य विषयाशा न तद्भवेत् ॥ २३९ ॥

(३) तत्र को मोहः कः शोक एकत्त्वमनुपश्यतः ॥ २४० ॥ एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् ॥२४१॥

---

(१) संन्यासोपनि० श्लो० २१ । २२ । २३ । २४ । प० ६३७ । पृ० २ । पं० १ ॥

(२) अध्यात्मोपनिषद्

(३) ईशोपनिषद् श्रु० ६ । प० १ । पृ० २ । पं० १ ॥

( १ ) परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ॥ विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ २४२ ॥

( २ ) कातकम्फलमासाद्य यथा वारि प्रसीदति ॥ तथा विज्ञानवशतस्स्वभावस्संप्रसीदति ॥ २४३ ॥

( ३ ) यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्त्तते ॥ तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वपातकैः ॥ २४४ ॥ खेचरा भूचरास्सर्वे ब्रह्मविद्दृष्टिगोचराः ॥ सद्य एव विमुच्यते कोटिजन्मार्जितैरघैः ॥ २४५ ॥

( ४ ) यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः ॥ तद्वद्ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ॥ २४६ ॥

---

( १-२ ) महोपनिषद् अ० ५ । श्लो० ७१ । ६६ । प०५९० । -५९१ पृ० १ । २ । पं० १ । ५ ॥

( ३ ) वराहोपनिषद् अ० ४ । श्लो० ३६ । ३७ । प० ९२२ । पृ० १ । पं० १ ॥

( ४ ) गीताभाष्ये चिद्घनानन्दकृते ॥

( १ ) प्रारब्धक्षयाद्देहत्रयं भङ्गम्प्राप्योपाधिविनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः सैव कैवल्यमुक्तिरिति ॥ २४७ ॥

( २ ) यो॓ऽ[१]कामो नि[२]ष्काम आ[३]प्तकामश्चा[४]त्मकामो न तस्य प्रा[५]णा उत्क्रामन्ति ॥२४८॥

( ३ ) अ[६]त्रैव समवनीयन्ते ॥ २४९ ॥

( ४ ) ब्रह्मैव सन्ब्रह्माप्येति ॥ २५० ॥

( ५ ) तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् ॥ २५१ ॥

---

१–योऽसौ अकामः वासनारूपकामाभावादकामतेत्यर्थः ॥ २–निर्गताः कामा यस्मात्सोऽयं निष्कामः ॥ ३–आप्ताः कामा येन स आप्तकामः ॥ ४–आत्मकामत्वेन यस्यात्मैव नान्यः कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति आत्मैवाऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एकशो नोर्ध्वं न तिर्यङ् नाध आत्मनोऽन्यत्कामयितव्यं वस्त्वन्तरम्, अत्राकामाद्या उत्तरोत्तरहेतवो भवन्ति ॥ ५–वागादयः ॥ ६–अत्रैव–अस्मिन्नेव परेणात्मनाऽविभागं गच्छन्ति विदुषि कार्याणि कारणानि च स्वयोनौ परब्रह्मसतत्त्वे समवनीयन्ते एकीभावेन समवसृज्यन्ते प्रलीयन्त इत्यर्थः ॥

---

( १ ) मुक्तिकोप० प० ८५९ । पृ० २ । पं० ५ ॥
( २–३–४ ) बृहदारण्यक० प० १५५।१३२।पृ० १।२।पं० ६।१९॥
( ५ ) गीताभाष्ये चिद्घनानन्दकृते द्रष्टव्यम् ॥

(१) प्रियेषु सुकृतमप्रियेषु च दुष्कृतम् ॥
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनात-
नम् ॥ २८२ ॥

(२) गताः[1] कलाः पञ्चदश[3] प्रतिष्ठा[4] देवांश्च[5] सर्वे प्रतिदेवतासु । कर्माणि[7] विज्ञानमयश्च[8] आत्मा परेऽव्यये[10] सर्व एकीभवन्ति[11] ॥ यथा नद्यः स्यन्दमानाः[12] समुद्रेऽस्तं गच्छन्ति नाम-रूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परम्[13] पुरुषमुपैति दिव्यम् ॥ २८३ ॥

---

३।२-विदुषो मोक्षकाले प्राणश्रद्धामहाभूतपञ्चकेन्द्रियम-नोऽन्नवीर्यतपोमन्त्रकर्मलोकात्मकाः पञ्चदशसंख्याकाः कला-देहारम्भकाः ॥ ४।१-प्रतिष्ठा गताः स्वस्वकारणम्प्राप्ता भवन्तीत्यर्थः ॥ ५।६-चक्षुरादिकरणस्थाः सूर्यादीनां शक्तयः सूर्यादिषु गता भवन्तीत्यनुषङ्गः ॥ ७-कर्माणि विदुषा कृतानि प्रारब्धव्यतिरिक्तानि ॥ ८-विज्ञानप्रायः कर्त्ता ॥ ९-अव्याकृतात्परे ॥ १०-अनन्ते ब्रह्मणि ॥ ११-एकीभ-वन्ति जलाद्याधारापनये सति सूर्यादिप्रतिबिम्बवत् स्वाश्रय-देहादेर्नाशे सति ब्रह्मण्येकतां प्राप्नुवन्तीत्यर्थः ॥ १२-गच्छ न्त्यः ॥ १३-अव्याकृतात् ॥

---

( १ ) नारदपरिव्राजकोप० प० ४०४ । पृ० १ । पं० ६ ॥
( २ ) मुण्डकोपनिषद् मु० ३ । खं० २ । म० ७।८ । प० ९ । पृ० १ । पं० १ ॥

(१) शास्त्रेण नश्येत्परमार्थदृष्टिः कार्यक्षमन्नश्यति चापरोक्षात् । प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ २६४ ॥

(२) नाऽवेदविन्मनुते तं बृहन्तं नाऽब्रह्मवित्परमं प्रैति धाम ॥ विष्णुक्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी २६५॥

ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥

इति श्रीमन्मैथिलकुलालङ्कारबाबूनन्दनशर्म्मसङ्गृहीते श्रुतिसिद्धान्तसारसङ्ग्रहे उपदेशप्रकरणं षष्ठम् ॥ ६ ॥

---

(१) वराहोपनिषद् अ० ३ । श्लो० ६९ । प० ८१५ । पृ० २ । पं० १ ॥

(२) शाठ्यायनीयोपनिषद् श्लो० ४ । प० ८२८।पृ० १।पं०४॥

॥ ॐतत्सद्ब्रह्मणे नमः ॥

श्रुतिसिद्धान्तसारसंग्रहः ।

# अथ संकीर्णप्रकरणं सप्तमम् ॥ ७ ॥



## अथ ज्ञानभूमयः ।

(१) ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ॥ विचारणा द्वितीया तु तृतीया तनुमानसी ॥ १ ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ॥ पदार्थाभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ २ ॥ स्थितः किं मूढ एवास्मि प्रेक्ष्योऽहं शास्त्रसज्जनैः ॥ वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ॥ ३ ॥ शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ॥ सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ४ ॥ विचारणा शुभेच्छाभ्यामिन्द्रियार्थेषु रक्तता ॥ यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ५ ॥ भूमिकात्रितयाभ्यासा-

(१) वराहोपनिषद् अ० ४। श्लो० १।१०। प० ८१९। पृ० २। पं० ४॥

च्चित्तेऽर्थविरतेर्वशात् ॥ सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ ६ ॥ दशा- चतुष्टयाभ्यासादसंसर्गफला तु या ॥ रूढ- सत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥७॥ भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम्॥ आभ्यन्तराणां बाह्यानां पदार्थानामभाव- नात् ॥ ८ ॥ परप्रयुक्तेन चिरं प्रत्यये- नाऽवबोधनम् ॥ पदार्थाभावना नाम षष्ठी भवति भूमिका ॥ ९ ॥ षड्भूमिका- चिराभ्यासाद्भेदस्यानुपलम्भनात्॥ यत्स्वभा- वैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ १० ॥ शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् ॥ यथावद्भेदबुद्ध्येदञ्जगज्जाग्रति दृश्यते ॥११॥ अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥ पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ॥ ॥ १२ ॥ विच्छिन्नशरदभ्रांशविलयं प्रवि- लीयते ॥ सत्त्वावशेष एवास्ते हे निदाघ दृढीकुरु ॥ १३ ॥ पञ्चभूमिं समारुह्य सुषु- प्तिपदनामिकाम् ॥ शान्ताशेषविशेषांश- स्तिष्ठत्यद्वैतमात्रके ॥ १४ ॥ अन्तर्मुखतया

नित्त्यं बहिर्वृत्तिपरोपि सन् ॥ परिश्रान्ततया नित्त्यं निद्रालुरिव लक्ष्यते ॥ १५ ॥ कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ॥ सप्तमी गाढसुप्त्याख्या क्रमप्राप्ता पुरातनी ॥ ॥ १६ ॥ यत्र नाऽसन्न सद्रूपो नाहं नाप्यनहंकृतिः ॥ केवलं क्षीणमननः आस्तेऽद्वैतेऽतिनिर्भयः ॥ १७ ॥ अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ॥ अन्तःपूर्णो बहिः पूर्णः पूर्णकुम्भ इवाऽर्णवे ॥ १८ ॥

( १ ) भूमित्रयेषु विहरन्मुमुक्षुर्भवति । तुरीयभूम्यां विहरन्ब्रह्मविद्भवति । पञ्चमभूम्यां विहरन्ब्रह्मविद्वरो भवति । षष्ठभूम्यां विहरन्ब्रह्मविद्वरीयान्भवति सप्तमभूम्यां विहरन्ब्रह्मविद्वरिष्ठो भवति ॥ १९ ॥

अथ शुकवामदेवमार्गद्वयमाह ।

( २ ) शुकश्च वामदेवश्च द्वे सृती देवनिर्मिते । शुको विहङ्गमः प्रोक्तो वामदेवः पिपीलिका ॥ २० ॥

---

( १ ) वराहोपनिषद् अ० ३ । प० ८१९ । पृ० २ । पं० २ ॥
( २ ) ०श्लो० ३६।४५ । अ० ४ । प० ८२२ । पृ० १ । पं०१ ॥

तत्र शुकमार्गलक्षणम् ।

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा ॥
महावाक्यविचारेण सांख्ययोगसमाधिना ॥
॥ २१ ॥ विदित्वा स्वात्मनो रूपं सम्प्र-
ज्ञातसमाधितः ॥ शुकमार्गेण विरजाः प्र-
यान्ति परमम्पदम् ॥ २२ ॥

अथ वामदेवमार्गलक्षणम् ।

यमाद्यासनजायासहठाभ्यासात्पुनःपुनः ॥
विघ्नबाहुल्यसञ्जातअणिमादिवशादिह ॥
॥ २३ ॥ अलब्ध्वापि फलं सम्यक्पुनर्भूत्वा
महाकुले ॥ पूर्ववासनयैवायं योगाभ्यासम्पु-
नश्चरन् ॥ २४ ॥ अनेकजन्माभ्यासेन
वामदेवेन वै पथा ॥ सोऽपि मुक्तिं समाप्नोति
तद्विष्णोः परमं पदम् ॥ २५ ॥ द्वाविमा-
वपि पन्थानौ ब्रह्मप्राप्तिकरौ शिवौ ॥ सद्यो-
मुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः ॥ २६ ॥

अथ देवगुरुभक्तेरावश्यकत्वम् ।

( १ ) यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २७ ॥

अथात्मनो दुर्लभत्वम् ।

( २ ) श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः ॥ आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ २८ ॥

अनेकसंकीर्णवाक्यानि ।

( ३ ) तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् इति ॥ २९ ॥

---

( १ ) श्वेताश्वतरोपनिषद् अ० ६ । श्लो० २३ । पं० १८७ । पृ० २ । पं० ७ ॥

( २ ) कठवल्ली अ० १ । व० २ । प० ७ । पृ० २ । प० ३ ॥

( ३ ) बृहदारण्यक० अ० ६ । ब्रा० ४ । श्रु० २१ । प०१५६ । पृ० १ । पं० ९ ॥

( १ ) एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य ॥ ३० ॥

( २ ) इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ॥ ३१ ॥

( ३ ) तं यथा यथोपासते तदेव भवति ॥३२॥

( ४ ) कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मन एव३३॥

( ५ ) आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत् ॥ ३४ ॥

अथ शान्तलक्षणम् ।

( ६ ) अन्धवत्पश्य रूपाणि शब्दं बधिरवच्छृणु ॥ काष्ठवत्पश्य वै देहं प्रशान्तस्येति लक्षणम् ॥ ३५ ॥

---

( १ ) मुण्डकोपनि० मु० २ । खं० १ । श्रु० १० । प० २२ । पृ० २ । पं० ५ ॥

( २ ) केनोपनि० चि० अ०२ । मं०५ । पत्र ३ । पृ०१।प०७ ॥

( ३ ) गीताभाष्ये द्रष्टव्यम् ॥

( ४ ) बृहदारण्यक० अ० १ । ६ । ब्रा० ५ । ४ । श्रु०३ । १२ । प० ११६ । १५५ । पृ० १ । २ । पं० २ । ७ ॥

( ५-६ ) अमृतनादोप० श्लो०१५ । १ । प०२२८।पृ०१।पं०४॥

अथ तत्त्वज्ञानानन्तरं शास्त्रत्यागमाह ।

( १ ) शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनःपुनः ॥ परमम्ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ३६ ॥

( २ ) ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्त्वतः ॥ पललमिव धान्यार्थी त्यजेद्ग्रन्थानशेषतः ॥ ३७ ॥

अथ निवृत्तिमार्गमाह ।

( ३ ) ये चामी[1] अरण्ये श्रद्धा[2]ᳬ सत्य[3]मुपासते तेऽर्चि[4]रभिसम्भवन्त्यर्चिषोऽह[5]रह्न आपूर्यमाणपक्षमापूर्यमाणपक्षा[6]द् यान्षण्मासानुदङ्ङादित्य[7]-

१-वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः ॥ २-श्रद्धायुक्ताः सन्तः ॥ ३-सत्यम्ब्रह्म हिरण्यगर्भात्मानम् ॥ ४-अर्चिरिति नाग्निज्वालामात्रं किन्तर्ह्यर्चिरभिमानिन्यर्चिःशब्दवाच्या देवतोत्तरमार्गलक्षणा व्यवस्थितैव तामभिसम्भवन्ति ॥ ५-अहर्देवताम् ॥ ६-शुक्लपक्षदेवताम् ॥ ७-उत्तरां दिशं सवितैति षडुत्तरायणदेवताः ॥

१ ( २८७ ) पृष्ठान्त्यटिप्पणिवत् ॥

( २ ) ब्रह्मबिन्दूपनिषद् श्लो० १९ । प० १८९ । पृ० १।पं०६ ॥

( ३ ) बृहदारण्यक० अ० ६ । ब्रा० २ । श्रु० १५ । १६ । प० १७० । पृ० २ । पं० ६ ॥

एति मासेभ्यो देवलोकं[1] देवलोकादादित्यमादित्याद्वैद्युतं[2] तान्वैद्युतान्पुरुषो मानस[3] एत्य[4] ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु परा:[5] परावतो[6] वसन्ति तेषान्न पुनरावृत्तिः[7] ॥ ३८ ॥

अथ प्रवृत्तिमार्गमाह ।

अथ ये[8] यज्ञेन[9] दानेन[10] तपसा[11] लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रि[12] रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य[13] एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रम्प्राप्याऽन्नम्भवन्ति

१–देवलोकाभिमानिनीं देवताम् ॥ २–विद्युदभिमानिनीं देवताम् ॥ ३–ब्रह्मलोकवासी पुरुषो ब्रह्मणा मनसा सृष्टो मानसः ॥ ४–कश्चिदेत्य आगत्य ॥ ५–प्रकृष्टाः सन्तः स्वयम् ॥ ६–परावतः प्रकृष्टाः समाः संवत्सराननेकान्वसन्ति ब्रह्मणोऽनेकान्कल्पान्वसन्तीत्यर्थः ॥ ७–अस्मिन्संसारे पुनरागमनम् ॥ ८–केवलकर्मिणः ॥ ९–अग्निहोत्रादिना ॥ १०–बहिर्वेदिभिक्षमाणेषु द्रव्यसंविभागलक्षणेन ॥ ११–बहिर्वेद्येव भिक्षादिव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना ॥ १२–उत्तरमार्ग इवेहापि देवता एव धूमादिशब्दवाच्याः धूमदेवतां प्रतिपद्यन्त इत्यर्थः ॥ १३–तामसदेवताः ॥

ता ँ स्तत्र देवा यथासोम ँ राजानमाप्या[1]-
यस्वापक्षीयस्वेत्येवमेना ँ स्तत्र भक्षयन्ति[2]
तेषां यदा[3] तत्पर्य्यवैत्यथेममेवाऽऽकाशमभि-[4]
निष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः
पृथिवीं ते पृथिवीम्प्राप्यान्नम्भवन्ति ते पुनः
पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लो-
कान्प्रत्युत्थायिनस्त[5] एवमेवानुपरिवर्त्तन्तेऽथ
य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा
यदिदन्दन्दशूकम्[6] ॥ ३९ ॥

### अथ नानाविषयवाक्यानि ।

(१) विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥४०॥

---

१–यज्ञ ऋत्विज आप्याय्याऽऽप्याय्य चमसस्थं भक्षणेनापक्षयं च कृत्वा पुनःपुनर्भक्षयन्तीत्यर्थः ॥ २–भृत्यानिव स्वामिन उपभुञ्जते देवाः ॥ ३–यज्ञदानादिलक्षणम् ॥ ४–परिक्षीयत इत्यर्थः ॥ ५–लोकान्प्रत्युत्तिष्ठन्तोऽग्निहोत्रादिकर्मानुतिष्ठन्ति ॥ ६–दंशमशकम् ॥

---

(१) मुक्तिकोपनिषद् अ० १ । प० ८५८ । पृ० १ । पं० ८ ॥

(१) यो वा एतदक्षरं गार्ग्यऽविदित्वाऽस्मिँल्लोके जुहोति यजते तपते तप्यते बहूनि वर्षसहस्राण्यन्तवदेवाऽस्य तद्भवति ॥ ४१ ॥

(२) तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति ॥ ४२ ॥

(३) वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ॥ यस्यैते नियता दण्डाः स त्रिदण्डीति कथ्यते ॥ ४३ ॥

(४) स[1] एनमविदितो न भुनक्ति ॥ ४४ ॥

(५) ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्म्मणः ॥ ४५ ॥ अत्र हि जन्तोः प्राणेषू-

---

१–स आत्मा अज्ञातः एनं जीवं न रक्षति ॥

---

(१) बृहदारण्यक० अ० ५ । ब्रा० ८ । श्रु० १० । प०१६९ । पृ० २ । पं० १ ॥

(२) बृहदारण्यक० अ० ६ । ब्रा० ४ । श्रु० २२ । पं० १५६ । पृ० २ । पं० ५ ॥

(३–४) गीताभाष्ये द्रष्टव्यं चि० ॥

(५) रामोत्तरतापिन्युप० प० ५३० । पृ० २ । पं० ३ ॥

त्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येना-
सावमृतीभूत्वा मोक्षीभवति तस्मादविमु-
क्तमेव निषेवेत अविमुक्तन्न विमुञ्चेत ॥ ४६ ॥

अथ सङ्गत्यागाशक्यत्वे सद्भिः कर्त्तव्यवाक्यम् ।

(१) सङ्गः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते ॥ स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजम् ॥ ४७ ॥

अथ पण्डितलक्षणम् ।

(२) अनागतानां भोगानामवाञ्छनमकृत्रिमम् ॥ आगतानां च संभोग इति पण्डितलक्षणम् ॥ ४८ ॥

(३) अयं बन्धुरयं नेति गणना लघुचेतसाम् ॥ उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ४९ ॥

(४) सात्त्विकराजसतामसलक्षणानि त्रयो गुणाः ॥ अहिंसासत्यमस्तेयब्रह्मचर्याऽपरि-

---

(१) गीताभाष्ये चिद्घनानन्दकृते ।
(२) महोपनिषद् अ० ५ । श्लो० १७१ । प० ५९७ । पृ० २ । पं० १ ॥
(३) महोपनि० अ० ६ । श्लो० ७१ । प० ६०३ । पृ० १ । पं० ४ ॥
(४) शारीरकोप० प० ६०५ । पृ० १ । पं० ४ ॥

ग्रहाः ॥ अक्रोधो गुरुशुश्रूषा शौचं सन्तोष आर्जवम् ॥ ५० ॥ अमानित्वमदम्भित्वमास्तिकत्वमहिंस्रता ॥ एते सर्वे गुणा ज्ञेयास्सात्त्विकस्य विशेषतः ॥ ५१ ॥ अहं कर्त्तास्म्यहं भोक्ताऽस्म्यहं वक्ताऽभिमानवान् ॥ एते गुणा राजसस्य प्रोच्यन्ते ब्रह्मवित्तमैः ॥ ॥ ५२ ॥ निद्राऽऽलस्ये मोहरागौ मैथुनं चौर्यमेव च ॥ एते गुणास्तामसस्य प्रोच्यन्ते ब्रह्मवादिभिः ॥ ५३ ॥ ऊर्ध्वं सात्त्विको मध्ये राजसोऽधस्तामस इति ॥ ५४ ॥ सत्यज्ञानं सात्त्विकम् ॥ धर्मज्ञानं राजसम् ॥ तिमिराऽन्धन्तामसमिति ॥ ५५ ॥

अथ प्रतिमापूजनवाक्यम् ।

( १ ) विश्वरूपं परञ्ज्योतिस्स्वरूपं रूपवर्जितम् ॥ योऽर्चयेत्प्रतिमां मां च स मे प्रियतरो भुवि ॥ ५६ ॥

---

( १ ) गोपालोत्तरतापिन्युपनिषद् श्लो० २ । प० ७९९ । पृ० २ । पं० ३।४ ॥

अथ सर्वात्मभावेन प्रणामः ।

( १ ) ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ ५७ ॥

अथोपवासलक्षणम् ।

( २ ) उप समीपे यो वासो जीवात्मपरमात्मनोः ॥ उपवासस्स विज्ञेयो न तु कायस्य शोषणम् ॥ ५८ ॥

अथेश्वरस्य प्रेरकत्वमाह ।

( ३ ) एष ह्येव साधु कर्म्म कारयति तं यमुन्निनीषते ॥ एष एवासाधुकर्म्म कारयति तं यमधो निनीषते ॥ ५९ ॥

अथ देवानाममृतदर्शनेन तृप्तिमाह ।

(४)न ह वै देवा अश्नन्ति न पिबन्ति एतदेव अमृतं दृष्ट्वा तृप्यन्ति ॥ ६० ॥

---

( १ ) याज्ञवल्क्योपनि० श्लो० ४ । प०८०७ । पृ०२ । पं०६ ॥
( २ ) वाराहोपनिषद् अ०९ । श्लो०३९ । प०८१३।पृ०१।पं०७॥
( ३ ) कौषातक्युप० अ० ३ । प० ३६० । पृ० २ । पं० ७ ॥
( ४ ) चिद्घनानन्दकृतगीताभाष्ये द्रष्टव्यः ॥

अथ सन्न्यासग्रहणवाक्यम् ।

(१) यदहरेव विरज्येत्तदहरेव प्रव्रजेत्॥६१॥

अथाजिह्वादिषण्णां लक्षणानि ।

(२) अजिह्वः षण्ढकः पङ्गुरन्धो बधिर एव च ॥ मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥ ६२ ॥ इदमिष्टमिदन्नेति योऽश्नन्नपि न सज्जते ॥ हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥ ६३ ॥ अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ॥ शतवर्षाञ्च यो दृष्ट्वा निर्विकारः स षण्ढकः ॥ ६४ ॥ भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ॥ योजनान्न परं याति सर्वथा पङ्गुरेव सः॥६५ ॥ तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ॥ चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते॥ ॥ ६६ ॥ हिताहितं मनो रामं वचः शोकावहं तु यत् ॥ श्रुत्वापि न शृणोतीव बधिरः स प्रकीर्तितः ॥६७॥ सान्निध्ये विषयाणां यः

(१) नारदपरिव्राजकोप० उप० ३ । प० ४०६ । पृ० १।पं०३॥
(२) नारदपरिव्राजकोपनिषद् उप०३। प०४०५। पृ०१।पं०१॥

समर्थोऽविफलेन्द्रियः ॥ सुप्तवद्वर्त्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ ६८ ॥

अथ परापूजोपचारलक्षणानि ।

( १ ) तस्य निश्चिन्तता ध्यानम् ॥ सर्वकर्मनिराकरणमावाहनम् ॥ निश्चयज्ञानमासनम् ॥ उन्मनीभावः पाद्यम् ॥ सदाऽमनस्कमर्घ्यम् ॥ सदा दीप्तिरपारामृतवृत्तिस्स्नानम् ॥ सर्वत्र भावना गन्धः ॥ दृक्स्वरूपाऽवस्थानमक्षताः ॥ चिदाप्तिः पुष्पम् ॥ चिदग्निस्वरूपं धूपः ॥ चिदादित्यस्वरूपं दीपः ॥ परिपूर्णचन्द्रामृतरसस्यैकीकरण नैवेद्यम् ॥ निश्चलत्वं प्रदक्षिणम् ॥ सोऽहंभावो नमस्कारः ॥ मौनं स्तुतिः ॥ सर्वसन्तोषो विसर्जनम् ॥ ६९ ॥

( २ ) नैनं कृताकृते तपत इति ॥ ७० ॥

---

१–अत्रार्थे श्लोकः–यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः ॥ तद्वद्ब्रह्मविदो दोषा नाश्रयन्ते कदाचन ॥ इति गीताभाष्ये उक्तम् ॥

---

( १ ) मण्डलब्राह्मणोपनिषद् श्रु० २ । प० ४५९ । पृ०२।पं०६॥

( २ ) चिद्घनानन्दकृतगीताभाष्ये उक्तम् ॥

अथावधूतलक्षणम् ।

(१) अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् । तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥७१॥

अथ सवितृसावित्रीनिरूपणम् ।

( २ ) आदित्य एव सविता द्यौस्सावित्री७२॥

अथावश्यकर्तव्यत्वमाह ।

( ३ ) त्रिसन्ध्यं शक्तितः स्नानं तर्पणं मार्जनन्तथा ॥ उपस्थानं पञ्चयज्ञान्कुर्यादामरणान्तिकम् ॥ ७३ ॥

अथ गुरोरनभिनन्दने दोषः ।

( ४ ) एकाक्षरप्रदातारं यो गुरुं नाभिनन्दति ॥ तस्य श्रुतन्तथा ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ७४ ॥

---

श्रीमद्भागवतोक्तश्लोकाः । योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कुत्रचित् ॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥

---

( १ ) अवधूतोपनिषद् श्लो० १ । प० ७०८ । पृ० २ । पं०५ ॥
( २ ) सावित्र्युप० श्रु०६ । प० ६०५ । पृ० १ । पं० ९ ॥
( ३–४ ) शाट्यायनीयोपनिषद् श्लो० १२ । ३६ । प० ८२९ । ८३१ । पृ० १ । २ । प०२ । ६ ॥

# अथ महाविष्णुस्तोत्रम् ।



श्रीशिव उवाच ॥

( १ ) ॐनमस्सच्चिदानन्दाद्वितीयाखण्ड-ब्रह्मणे ॥ अचलाय नमोऽजायाऽक्रियकूट-स्थविष्णवे ॥ १ ॥ अनन्ताय प्रबोधाय नमो ज्योतिस्स्वरूपिणे ॥ नमस्ते स्वप्रकाशाय शिवाय परमात्मने ॥ २ ॥ जगदाधार-भूताय नमो विश्वान्तरात्मने ॥ नारायण हृषी-केश वासुदेव नमोस्तु ते ॥ ३ ॥ केशवाच्युत भोः कृष्ण हरे माधव निर्गुण ॥ श्रीराम परमेशान जनार्दन नमोस्तु ते ॥ ४ ॥ त्वय्यनन्ते परा-नन्दे स्वप्रबोधघने यदा ॥ सर्गोत्पत्तिविधि-ज्ञानस्वभावो जायते तदा ॥ ५ ॥ गुणानां समतावस्था रज्जौ सर्पवदुत्थिता ॥ अधि-ष्ठानाभिधः साक्षी तद्योगात्पुरुषश्च त्वम् ॥ ॥ ६ ॥ सत्त्वोद्रेकाच्च सा शक्तिर्मायाऽऽवर-णसंज्ञिता ॥ तत्सम्बन्धाच्च त्वं विष्णो सर्व-ज्ञेशनिमित्तकः ॥ ७ ॥ रजोद्रिक्ता च सा माया विक्षेपमहदात्मिका ॥ तद्योगाद्धेम-

( १ ) शिवरहस्ये ॥

गर्भस्त्वं क्रियाज्ञानात्मको भवेत् ॥ ८ ॥
तमोद्रेकाच्च विक्षेपादहङ्काराभिधा स्मृता ॥
तद्योगात्त्वम्भवेद्विष्णो प्रधानपुरुषो विराट् ॥
॥ ९ ॥ ततो व्योमानिलाग्न्यब्भूसूक्ष्माणि
प्रभवन्ति वै ॥ पञ्चीकृततमोभागैरनन्ताण्डा-
नि चित्त्वयि ॥ १० ॥ भुवनानि शरीराणि
तत्र त्वं सृजसि प्रभो ॥ रजोभागभवाः
प्राणास्तथा कर्मेन्द्रियाणि च ॥ ११ ॥ देवा-
ज्ञानेन्द्रियाण्यन्तःकरणानि च सत्त्वतः ॥
क्षिप्तानण्डेऽक्षमान्वीक्ष्य तत्संघातान्हि त्वं
हरे ॥ १२ ॥ तदा चित्प्रतिबिम्बेन प्रवेशोऽ-
विद्यया कृतः ॥ आवृणोत्यपराभेदं दृग्दृश्यो-
र्ब्रह्मसर्गयोः ॥ १३ ॥ स्वाविद्यावशतः
कर्त्ता भोक्ता त्वं जीवसंज्ञकः ॥ एकस्त्वम्ब-
हुधा जातो भोग्यभोक्तेशभेदतः ॥ १४ ॥ एवं
त्वयि चिदम्भोधौ ब्रह्माण्डादितरङ्गकाः ॥ माया
वातेरिताः सर्वे तच्छान्तौ ते लयङ्गताः ॥ १५ ॥
त्वदुन्मेषनिमेषाभ्यामण्डानाम्प्रभवाप्ययौ ॥
त्वद्रोमकूपेष्वण्डानि फलान्यौदुम्बरे यथा ॥
॥ १६ ॥ उपादानञ्चोर्णनाभिर्ह्येकः

स्थूलंतया[1] यथा ॥ लिङ्गदेहतयाऽभिन्न-निमित्तन्तन्तुकर्मणि ॥ १७ ॥ उपादा-नम्प्रपञ्चस्य मायामाश्रित्य त्वन्तथा ॥ तंत्सं-स्कारतयाऽभिन्ननिमित्तं[2] विश्वकर्मणि ॥ ॥ १८ ॥ अतोऽभिन्ननिमित्तोपादानं स्वारो-पितस्य त्वम् ॥ मायाविलसितं विश्वं स्याद-निर्वचनीयकम् ॥ १९ ॥ स्वरूपात्यागपू-र्वेण यद्विशेषेण वर्त्तनम् ॥ तद्वै विवर्त्तकं प्रोक्तं शुक्तिकारजतं यथा ॥ २० ॥ सच्चि-दानन्दरूपस्यापरित्यागेन वै तथा ॥ विश्वा-कारेण त्वञ्जातस्ततो विश्वं विवर्तकम् ॥२१॥ मृत्तिकादिविकारेषु यथा सत्यं मृदादिकः ॥ शुक्तिकादिविवर्त्तेषु यथा सच्छुक्तिकादि-काः ॥ २२ ॥ तथा त्वं चिद्विवर्त्तेषु सत्यं सच्चित्प्रियात्मकः ॥ त्वद्विलासमिदं विश्व-माप्तकामस्य बालवत् ॥ २३ ॥ बिम्बप्रति-बिम्बाभ्यां यथा बिम्बो द्विधा भवेत् ॥ तथेशजीवरूपौ हि त्वयि नाथ विकल्पितौ ॥ ॥ २४ ॥ चुम्बकस्य च सान्निध्याद्यथा ह्या-

१–स्थूलदेहतया ॥ २–जीवसंस्कारतयेति ॥

कर्षणक्रिया ॥ तथा त्वय्यपि कर्तृत्वं विकल्पं न च वास्तवम् ॥ २५ ॥ यथा घटमठाकाशौ सङ्गहीनौ निरन्तरम् ॥ तथा देहत्रयस्थोऽपि निस्सङ्गस्त्वं चिदात्मकः॥ २६ ॥ रज्जुसर्पे यथा रज्जुर्निर्विकारः प्रवर्तते ॥ स्वविवर्त्ते तथा त्वं हि विकाररहितः सदा ॥ २७ ॥ सुवर्णकारणाद्भिन्नं यथा हि रुचकं ह्यसत् ॥ भवच्चित्कारणाद्भिन्नं वितथं वै जगत्तथा ॥ २८ ॥ युष्मच्चिन्मयेकेऽस्मिन्विवादं कुत्र वै प्रभो ॥ त्वयि शुद्धे बन्धमोक्षौ स्वप्नबन्धनमुक्तवत् ॥ २९ ॥ त्वं सर्वहृदयस्थो वै त्वयि सर्वं प्रतिष्ठितम् ॥ वस्तुतस्त्वं निराधारो वासुदेवपदः स्मृतः ॥ ॥ ३० ॥ यथा शुक्तिपरिज्ञानाद्रजतन्न प्रवर्तते ॥ त्वद्विवर्त्तमिदं तद्वत्त्वज्ज्ञानाद्वै निवर्त्तते ॥ ३१ ॥ त्वन्मूलमखिलं विश्वं त्वत्तो भिन्नन्न विद्यते ॥ त्वत्कृपालेशमात्रेण सर्वञ्जानाति भक्तिमान् ॥ ३२ ॥ त्वद्भक्तिविमुखानां वै ज्ञानं कल्पशतैर्न च ॥ तस्मादहं महाविष्णो मृगयामि त्वदङ्घ्रिकम् ॥ ३३ ॥

दयादृष्टिकटाक्षेण पश्य नाथ दयानिधे ॥ शर-
णागतञ्च माम्पाहि संसारक्लेशसागरात्॥३४॥
महाविष्णोरिदं स्तोत्रं यः पठेद्भक्तिसंयुतः ॥
वाञ्छितञ्च तथा ज्ञानं तस्य शीघ्रं प्रजायते॥३५

इति श्रीमहाविष्णुस्तोत्रं सम्पूर्णम् ॥

(१) श्रीमहादेव उवाच ॥ नमोऽस्तु रा-
रामाय सशक्तिकाय नीलोत्पलश्यामलकोम-
लाय । किरीटहाराङ्गदभूषणाय सिंहासन-
स्थाय महाप्रभाय ॥ १ ॥ त्वमादिमध्या-
न्तविहीन एकः सृजस्यवस्यत्सि च लोकजा-
तम् ॥ स्वमायया तेन न लिप्यसे त्वं यत्स्वे
सुखेऽजस्ररतोऽनवद्यः ॥ २ ॥ लीलां विधत्से
गुणसंवृतस्त्वं प्रपन्नभक्तानुविधानहेतोः ॥
नानाऽवतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानि-
भिरेव नित्यम् ॥ ३ ॥ स्वांशेन लोकं
सकलं विधाय तं बिभर्षि च त्वं त्वदधः
फणीश्वरः ॥ उपर्यधोभान्वनिलोडुपौषधीमव-
र्षरूपोऽवसि नैकधा जगत् ॥ ४ ॥ त्वमिह
देहभृतां शिखिरूपकः पचसि भक्तमशेष-

(१) महाशम्भुसंहितायाम् ॥

मजस्रकम् ॥ पवनपञ्चकरूपसहायवाञ्जगदखण्डमनेन बिभर्षि भोः ॥ ५ ॥ चन्द्रसूर्यशिखिमध्यगतं यत्तेज ईश चिदशेषतनूनाम् ॥ अभवत्तनुभृतामिह धैर्यं शौर्यमायुरखिलं तव सत्त्वम् ॥ ६ ॥ त्वं विरञ्चिशिवविष्णुविभेदात्कालकर्म्मशशिसूर्य्यविभागात ॥ वादिनां पृथगिवेश विभासि ब्रह्म निश्चितमनन्यदिहैकम् ॥ ७ ॥ मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः ॥ तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति८ यद्यत्समुत्पन्नमनन्तसृष्टावुत्पत्स्यते यच्च भवच्च यच्च ॥ न दृश्यते स्थावरजङ्गमादौ त्वया विनाऽतः परतः परस्त्वम् ॥ ९ ॥ तत्त्वं न जानन्ति परात्मनस्ते जनास्समस्तास्तव माययातः ॥ त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम् ॥ १० ॥ ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः ॥ ततो बुधस्त्वामिदमेव रूपं भक्त्या भजन्मुक्तिमुपैत्यदुःखः ॥ ११ ॥ अहम्भवन्नामगुणैः कृतार्थो वसामि काश्यामनिशं भवान्या ॥

मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव रामनाम ॥ १२ ॥ इमं स्तवं नित्यमनन्यभक्त्या शृण्वन्ति गायंति लिखंति ये वै ॥ ते सर्वसौख्यं परमञ्च लब्ध्वा भवत्पदं यांति भवत्प्रसादात् १३

इति श्रीमहादेवकृतरामस्तोत्रं सम्पूर्णम् ॥

अथ कौत्सायणिस्तुतिः ।

(१)त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ॥ त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वन्निशाकरः ॥ १ ॥ त्वं मनुस्त्वं यमश्च त्वं पृथिवीत्वमथाच्युतः ॥ स्वार्थे स्वाभाविकेऽर्थे च बहुधा संस्थितिस्त्वयि ॥ २ ॥ विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ॥ विश्वभुक् विश्वमायुस्त्वं विश्वक्रीडारतिप्रभुः ॥ ३ ॥ नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ॥ अचिन्त्यायाप्रमेयाय त्वनादिनिधनाय च ॥ ४ ॥

इति कौत्सायणिस्तुतिः ॥

इति श्रीमन्मैथिलकुलालङ्कारबाबूनन्दनशर्मसङ्गृहीते श्रुतिसिद्धान्तसारसंग्रहे संकीर्णप्रकरणं समाप्तम् ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

( १ ) मैत्रायंण्युपनिषद् ॥

